"नभश्च नभस्यश्च वार्षिकावृतू" यजु०। ऋतुशब्दे १४१३ पृ० अस्य सौरचान्द्रत्वविकल्पस्य दृश्यः।

**प्रावृषायणी** स्त्री प्रावृषा अयनं यस्याः गौरा० ङीष्। कपिकच्छ्वाम् (आलकुशी) अमरः।

**प्रावृषिक** पुंस्त्री प्रावृषि कायति शब्दायते कै–क अलुक्स०। १मयूरे धरणिः। स्त्रियां जातित्वात् ङीष्। प्रावृषि भवः ठञ्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृषिज** पु० प्रावृषि जायते जन–ड अलुक स०। १झञ्झानिले त्रिका०। २वर्षाकालजाते त्रि० "ञे विभाषा" वा अलुक स०। तेन प्रावृड्ज तत्रार्थे त्रि०।

**प्रावृषीण** त्रि० प्रावृषि भवः बा० ख। वर्षाकालभवे ऋ०७। १०३।७ भाष्य।

**प्रावृषेण्य** त्रि० प्रावृषि भवः एन्य। १वर्षाकालजाते २कदम्बवृक्षे पु० मेदि०। ३कुटजवृक्षे ४धाराकदम्बे च पु० राजनि०। ५कपिकच्छ्वाम् ६रक्तपुनर्नवायां स्त्री राजनि०। प्रावृषि दीयते कार्यं वा एन्य। ७वर्षाकाले देये करादौ ८तत्र कार्ये च त्रि०। ९पारावर्ते न० शब्दर०।

**प्रावृषेय** पु० १देशभेदे भा०भी०९अ०। प्रावृषायां भवः ढक्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृष्य** पु० प्रावृषि भवः बा० यत्। १धाराकदम्बे २कुटजे ३विकङ्कतवृक्षे च राजनि०।

**प्रावेशन** त्रि० प्रवेशने दीयते कार्यं वा व्युष्टा० अण्। १प्रवेशने दीयमाने २तत्रकार्ये च। [ङीप्।

**प्रावेशिक** त्रि० प्रवेशाय साधुः ठञ्। प्रवेशसाधने स्त्रियां

**प्राशन** न० प्र+अश–भावे ल्युट्। अन्नादेः प्रकर्षेण भोजने अन्नप्राशनम्।

**प्राशास्त्र** न० प्रशास्तुर्भावः कर्म वा उद्गा० अञ्। प्रशास्तुर्ऋत्विजः कर्मणि १शस्त्रशंसने २तद्भावे च।

**प्राशित** त्रि० प्र+अश–भोजन कर्मणि क्त। १भक्षिते। भावे क्त। २भक्षणे न० ३पितृयज्ञे तर्पणे जटा० "प्राशितं पितृतर्पणम्" मनुना तत्रार्थे परिभाषितत्वात्।

**प्राशित्र** न० यज्ञिये यवमात्रं पिप्पलमात्रं वाऽवत्तं ब्रह्मोद्देश्यके भागे शिष्टाशभेदे "शिष्टात् प्राशित्रावदानम्" कात्या० ११।१७। "मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्षते" २।२।१५ "प्राशित्रमवदीयमानमाङ्गिरमायां च प्राशित्रं ब्रह्मणो भागः यवमात्रं पिप्पलमात्रं वाऽवत्तः" कर्कः "स यत् प्राशित्रमवद्यति" इत्युपक्रमे। अथास्य ब्रह्मभागं पर्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भागं प्रतिविद्वान् आस्ते यत् प्राशित्रं तदस्मै पर्याहार्षुस्तत्प्राशीदथ यमस्मै ब्रह्मभागं पर्याहरन्ति तेन भागी स यदतऽऊर्ध्वमसंस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा अस्मै ब्रह्मभागं पर्याहरन्ति" शत०ब्रा० १।७।४।१८

**प्राशित्राहरण** प्राशित्रं ह्रियतेऽनेन हृ–करणे ल्युट्। प्राशित्ररूपभागहरणसाधने गोकर्णाकृतिपात्रभेदे शत० ब्रा० १।२।१।६ भाष्यम्।

**प्राशु** पु०प्र+अश–भोजने उण्। भक्षणे प्राशवे हितः यत्। प्राशव्य प्रकृष्टभक्षणयहिते ऋ० ८।२१।६ भा०। प्रा०स०। २प्रकृष्टशीघ्रे निघण्टुः। [यजु०२४।२७

**प्राशृङ्ग** त्रि० प्रकृष्टं शृङ्गमस्य वेदे दीर्घः। प्रकृष्टशृङ्गयुक्ते

**प्राश्निक** पु०प्रश्नाय तदुत्तरदानाय साधु ठक्। १सभ्ये त्रिका० २प्रश्नोत्तरदानाय साधौ त्रि०।

**प्राश्नीपुत्र** पु०यजुर्वेदवंशस्थे ऋषिभेदे शत०ब्रा० १४।९।४।३२

**प्राष्टवर्ण** पु०प्रकर्षेण अष्टः प्राप्तो वर्णः। इष्टिवर्णे तत्रावर्ण्ये निरु० १०।२९

**प्रास** पु० प्रास्यते प्र+अस–क्षेपे कर्मणि घञ्। कुन्तास्त्रे अमरः। कुन्तशब्दे २००१८ पृ० दृश्यम्।

**प्रासक** पु०प्रास+संज्ञायां कन्। पाशके छेमच० तस्य देवकैः क्षिप्यमाणत्वात् तथात्वम्। स्वार्थे क। २प्रासास्त्रे पु०।

**प्रासङ्ग** पु० प्र+सन्ज–कर्मणि घञ् दीर्घः। दम्यवत्सानां स्कन्धे शिक्षार्थमासज्यमाने युगभेदे अमरः। तं वहति यत्। प्रासङ्ग्य तद्वाहके दम्यवृषे अमरः।

**प्रासङ्गिक** त्रि०प्रसङ्गादागतः ठञ्। प्रसङ्गागते स्त्रियां ङीप्।

**प्रासाद** पु० प्रसीदत्यस्मिन् प्र+सद–आधारे घञ् दीर्घः। देवनृपयोर्गृहे अमरः देवगृहशब्दे ३६७८ पृ० दृश्यम्।

**प्रासादकुक्कुट** पुंस्त्री० प्रासादे कुक्कुट इव। पारावते त्रिका० स्त्रियां जातित्वात् ङीष्।

**प्रासिक** पु०प्रासः प्रहरणमस्य ठक्। कुन्तेन योद्धरि अमरः

**प्रास्तारिक** त्रि० प्रस्तारे व्यवहरति ठक्। प्रस्तारे व्यवहारिणि। [ध्यादौ मङ्गलद्रव्ये स्त्रियां ङीप्।

**प्रास्थानिक** त्रि० प्रस्थाने साधु ठञ्। यात्रिके मङ्गल-

**प्रास्थिक** त्रि०प्रस्थस्य वापः ठञ्। १प्रस्थमितधान्यवपनाधारे क्षेत्रे २भूमौ स्त्री ङीप्। प्रस्थं सम्भवति (अस्मिन् समावेशयति) अवहरति पचति वा ठञ्। प्रस्थमितधान्यादेः ३अस्मिन् समावेशके ४अवहारके ५पाचके च त्रि० स्त्रियां ङीप्। प्रस्थः परिमाणमस्य ठञ्। ६प्रस्थपरिमाणयुक्ते

धान्यराश्याद्यौ त्रि॰ प्रस्थेन क्रीतम् ठञ् । ७प्रस्थेन क्रीते त्रि॰ स्त्रियां ङीप् । प्रस्थस्य निमित्तं संयोग उत्पातो वा ठञ् । प्रस्थस्य ८निमित्ते ९संयोगे १०उत्पाते वा ।

**प्राह्ह** पु॰ प्रकर्षेण आह्वेति शब्दोऽत्र । नृत्योपदेशे शब्दमा॰।

**प्राह्ण** पु॰ प्रारम्भोऽह्नः प्रा॰स॰अच्समा॰ अह्नादेशः णत्वञ्च । त्रिधाविभक्तदिनस्य पूर्वभागे १पूर्वाह्णे अमरः । प्रकृष्टमह्वर्यत्र तिष्ठद्गु॰ अव्ययी॰ । २प्रकृष्टदिनयुते अव्य॰ ।

**प्राह्णेतन** त्रि॰प्राह्णे भवः ट्यु तुट् च निएदन्तत्वम् । पूर्वाह्णभवे स्त्रियां ङीप् ।

**प्राह्णेतरा(मा)म्** अव्य॰ अतिशयेन प्राह्णे तरप् तमप् वा आसु घकालेत्यादिना सप्तम्या अलुक् । अत्यन्तप्रातःकाले इत्यर्थे ।

**प्रिय** त्रि॰ प्रीणाति प्री-तर्पणे क । १भर्त्तरि पत्यौ अमरः २भार्य्यायां स्त्री । ३प्रियके मृगभेदे पु॰स्त्री जटा॰४ऋद्धिनामौषधौ ५हृद्ये त्रि॰ मेदि॰। ६जीवकौषधौ राजनि॰।

**प्रियंवद** त्रि॰प्रियं वदति वद-खच् मुम् । १प्रियकरवादिनि मधुरभाषिणि । २खेचरे ३गन्धर्वभेदे पु॰ शब्दमा॰ वदेरन्तःस्थवादित्वात् प्रियम्वदेति मयुक्तशब्दकल्पनं प्रामादिकमेव । "भुवि भवेन्नभजरैः प्रियंवदा" वृ॰र॰ उक्ते द्वादशाक्षरपादके ४छन्दोभेदे स्त्री । ५शकुन्तलासहचरीभेदे स्त्री शकु॰ दृश्यम् ।

**प्रियक** पु॰ प्रिय+स्वार्थे क संज्ञायां कन् वा । १पीतसालके (पियासाल) २नीपे ३चित्रमृगे ४भ्रमरे ५प्रियङ्गौ ६कुङ्कुमे मेदि॰ ७धाराकदम्बे ८असनवृक्षे राजनि॰ । ९स्कान्दानुचरभेदे भा॰श॰ ४६अ॰ । तस्यापत्यं विदा॰ अञ् । प्रैयक चित्रमृगापत्ये पुंस्त्री॰।

**प्रियकृत्** त्रि॰ प्रियं करोति कृ-क्विप् तुच् । १प्रियकारिणि २विष्णौ पु॰ "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस॰ ।

**प्रियङ्कर** त्रि॰ प्रियं करोति कृ-खच् मुम् । १प्रियकारिणि २श्वेतकण्टकार्य्यां ३वृहज्जीवन्त्याम् ४अश्वगन्धायाञ्च स्त्री राजनि॰ गौरा॰ ङीष् ।

**प्रियङ्करण** त्रि॰ अप्रियं प्रियं करोत्यनेन कृ-करणे ख्युन् । अप्रियस्य प्रियताकरणसाधने ।

**प्रियङ्गु** स्त्री प्रिय+गम-डु नि॰मुम् च । १स्वनामख्याते वृक्षे अमरः "प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत् । रक्तादियोगदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्विषमोहघ्नी तद्वद्गन्धप्रियङ्गुका । तत्फलं मधुरं रूक्षं कषायं शीतलङ्गुरु । विबन्धाध्मानबलकृत् संग्राहि कफपित्तजित्" भावप्र॰। "प्रियङ्गुकलिकारम्" इति बुधप्रणाममन्त्रः । २राजिकायां राजनि॰ ३पिप्पल्याम् ४कङ्गौ (काङ्गनी) धान्ये मेदि॰ ५कटुक्यां धरणिः । [लमणिः ।

**प्रियजन** पु॰कर्म॰। १हृद्ये जने । २प्रौढभावानुविद्धे उज्ज्व-

**प्रियजीव** पु॰प्रियो जीवो यस्मिन् । श्योनाकवृक्षे राजनि॰।

**प्रियतम** पु॰ अतिशयेन प्रियः तमप् । १मयूरशिखावृक्षे २अतिप्रिये त्रि॰ शब्दच॰ ।

**प्रियता** स्त्री प्रियस्य भावः तल् । १स्नेहे २प्रेमणि अमरः । त्व । प्रियत्व तदर्थे न॰ शब्दर॰।

**प्रियतोषण** त्रि॰ प्रियं तोषयति तुष-णिच् ल्यु । १प्रियसन्तोषकारके "नारीपादौ स्वहस्तेन धारयेत् जघनोपरि । स्तनापीड़करः कामी कामयेत् प्रियतोषणः" रतिमञ्जर्य्युक्ते २रतिबन्धभेदे ।

**प्रियदत्ता** स्त्री दीयमानपृथिव्याम् "नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् । दाने वाऽप्यथ वाऽऽदाने नामास्याः प्रथमं प्रियम् । य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्" भा॰अनु॰ ६२अ॰ ।

**प्रियदर्शन** पु॰ प्रियं दर्शनमस्य । १क्षीरिकावृक्षे २शुकखगे च जटा॰ ३सुदृश्ये त्रि॰ । [हेमच॰ ।

**प्रियप्रायस्** न॰ प्रियस्य प्रायः बाहुल्यं यत्र । प्रियवाक्ये

**प्रियप्रेप्सु** त्रि॰ ७त॰ । इष्टार्थोद्युक्ते जटा॰ । [प्रिये त्रि॰।

**प्रियमधु** पु॰प्रियं मधु मद्यं यस्य । १बलरामे हेमच॰ २मद्य-

**प्रियमाल्यानुलेपन** त्रि॰ प्रियं माल्यमनुलेपनं च यस्य । १माल्यानुलेपनप्रिये २स्कन्दानुचरभेदे पु॰भा॰श॰ ४६अ॰।

**प्रियमेध** पु॰ १अजमीढस्य पुत्रभेदे "अजमीढस्य वंशाः स्युः प्रियमेधादयो द्विजाः" भाग॰ ९।२१।१७श्लो॰ । २यज्ञोपेते ऋषिभेदे ऋ॰ १।४५।४ भा॰ ।

**प्रियम्भविष्णु** त्रि॰अप्रियः प्रियो भवति भू-कर्त्तरि खिष्णुच् । अप्रिये प्रिये भवितरि । खुकञ् प्रियम्भावुक तदर्थे त्रि॰।

**प्रियरूप** त्रि॰प्रियं रूपमस्य । १हृद्यरूपे । तस्य भावः मनोज्ञा॰ वुञ् । प्रैयरूपक तस्य भावे न॰। कर्म॰। २हृद्ये रूपे न॰।

**प्रियवचन** त्रि॰प्रियं वचनं वैद्यकवचनं वा यस्य । १प्रियवादिनि वैद्यकोक्तवाक्ये भक्तिमति २रोगिणि राजनि॰ । कर्म॰। ३हृद्ये वाक्ये न॰ ।

**प्रियवर्णी** स्त्री प्रियो वर्णो यस्याः गौरा॰ ङीष् । प्रियङ्गौ जटाधरः । [लतायाञ्च ।

**प्रियवल्ली** स्त्री नित्यकर्म॰ । १प्रियङ्गौ राजनि॰ २हृद्यायां

**प्रियवादिन्** त्रि॰ प्रियं वदति वद–णिनि । प्रियवाक्यभाषके स्त्रियां ङीप् "भार्य्या चाप्रियवादिनी" चाणक्यः ।

**प्रियव्रत** त्रि॰ प्रियं व्रतमस्य । १व्रतप्रिये स्वायम्भुवमनोः २पुत्रभेदे पु॰ हरिवं॰ २अ॰ । [१।६।२३।

**प्रियश्रवस्** पु॰ प्रियं श्रवः श्रवणं यस्य । परमेश्वरे भाग॰

**प्रियसख** पु॰ कर्म॰ ६त॰ वा, अच्समा॰ । १हृद्ये सख्यौ २प्रियस्य सख्यौ च । स्त्रियां ङीप् । ३खदिरे शब्दच॰।

**प्रियसङ्गमन** त्रि॰ प्रिययोः सङ्गमनं यत्र । १प्रिययोर्मेलनस्थाने २कश्यपादित्योर्मेलनस्थाने देशभेदे पु॰ "यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ । प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन्" हरिवं॰ १२४अ॰ ।

**प्रियसत्य** न॰कर्म॰। १तथ्ये अथ च प्रिये सुन्तवाक्ये हेमच॰ प्रियं सत्यं यस्य । २सत्यप्रिये त्रि॰ ।

**प्रियसन्देश** पु॰ प्रियं सन्दिशति सम्+दिश–अण् उप॰स॰। १चम्पकवृक्षे भावे घञ् ६त॰ । २प्रियसंवादे शब्दच॰ ।

**प्रियसाल(क)** पु॰कर्म॰स्वार्थे क वा। असनवृक्षे (पियासाल) राजनि॰ ।

**प्रियादि** विशेष्यवाचिनि समानाधिकरणस्त्रीलिङ्गशब्दे परे ब॰व्री॰ पूर्वस्य पुंवद्भावे पर्युदस्ते शब्दगणे स च गणः पा॰ग॰सू॰ उक्तो यथा "प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्ति सचिवा स्वा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामना तनया" । सुन्दरी प्रिया यस्य । सुन्दरी प्रिय इत्यादि ।

**प्रियाम्बु** पु॰ प्रियं पितॄणां प्रियमम्बु मूले सिक्तं जलमस्य । १आम्रवृक्षे राजनि॰ । २जलप्रिये त्रि॰ ।

**प्रियार्ह** त्रि॰प्रियमर्हति अर्ह–अण् उप॰स॰। १प्रियवाक्यादियोग्ये २विष्णौ पु॰ "अभिप्रायः प्रियार्होऽर्हः" विष्णुस॰।

**प्रियाल** पु॰ प्रियाय अलति पर्य्याप्नोति अल–अच् । प्रियसाले (पियासाल) २द्राक्षायां स्त्री राजनि॰ भावप्र॰ पियाल इत्येव पाठः "पियालस्तु खरस्कन्धश्चारो बहुलवल्कलः । राजादनस्तापसेष्टः सन्नकद्रुर्द्दुधन्वटः । चारः पित्तकफासघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । पियालमज्जा मधुरो वृष्यः पित्तानिलापहः । हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः" भावप्र॰ ।

**प्रियोदित** न॰ कर्म॰ । चाटुवाक्ये शब्दरत्ना॰ ।

**प्री** तर्पणे स्वा॰उभ॰सक॰अनिट् । प्रयति ते अप्रैषीत् अप्रैष्ट पिप्राय पिप्रिये ।

**प्री** प्रीतौ कान्तौ (इच्छायाम्) सक॰ दिवा॰ आत्म॰ अनिट् । प्रीयते अप्रैष्ट पिप्रिये ।

**प्री** तर्पणे सक॰ कान्तौ तृप्तौ अक॰ क्र्या॰उभ॰अनिट् । प्रीणाति प्रीणीते अप्रैषीत् अप्रैष्ट पिप्राय पिप्रिये । प्रीत. । णिच् नुक् । प्रीणयति ते । [अत्रापि नुक् प्रीणयतीत्येके ।

**प्री** तर्पणे सक॰चु॰उभ॰अनिट् । प्राययति ते अपिप्रयत् ते ।

**प्रीण** त्रि॰ प्री–णिच् कर्त्तरि अच् । १प्रीणनकारके करणे अच् । २नर्मणि मेदि॰ । पुराणार्थप्रशब्दात् भवार्थे ख । २पुराणे त्रि॰ त्रिका॰ ।

**प्रीणन** न॰ प्री–णिच्–नुक्–ल्युट् । तर्पणे अमरः ।

**प्रीणस** पु॰ प्रीणि–बा॰ असच् । गण्डके राजनि॰ ।

**प्रीत** त्रि॰ प्री–कर्त्तरि क्त । हृष्टे अमरः ।

**प्रीति** स्त्री प्री–भावे क्तिन् । १हर्षे २आमोदे ३तृप्तौ च । विष्कुम्भादियोगेषु ४द्वितीययोगे । ५कामस्य पत्नीभेदे रत्याः सपत्न्यां च "वेश्याऽनङ्गवती नाम विभूतिद्वादशीव्रतम् । समाप्य माघमासस्य द्वादश्यां लवणाचलम् । निवेदयन्ती गुरवे शय्याञ्चोपस्करान्विताम् । अलङ्कृत्य हृषीकेशं सौवर्णामरपादपम् । स चानङ्गवती वेश्या कामदेवस्य साम्प्रतम् । पत्नी, सपत्नी संजाता रत्याः प्रीतिरिति स्मृता" मात्स्ये ८२अ॰ ।

**प्रीतिजुष** त्रि॰ प्रीतिं जुषते जुष–क । १प्रीतिभाजि २अनिरुद्धपत्न्यामुषायां स्त्री शब्दरत्ना॰ "विश्वकेतुः प्रीतिजुषः सुतः" त्रिका॰ तत्पुत्रोक्तौ । [प्रहासिनि पु॰ हेमच॰।

**प्रीतिद** त्रि॰ प्रीतिं ददाति दा–क । प्रीतिदायके ( भाँड़ )

**प्रीतिदत्त** त्रि॰३त॰। १प्रीत्या दत्ते २स्त्रीधनभेदे न॰ यथाह मिता॰ कात्यायनः "प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते" । भर्तृप्रीतदत्तस्थावरे तु विशेषः दाय॰ उक्तो यथा "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृते तत् । सा यथा काम॰ मश्नीयात् दद्याद्वा स्थावरादृते" ।

**प्रीतिदाय** पु॰ प्रीत्या दीयते दा–कर्मणि घञ् । प्रीत्या दत्ते "श्वशुरात् प्रीतिदायं तु प्राप्य सा प्रीतमानसा" भा॰आश्व॰ ८६ अ॰ ।

**प्रीतिभोज्य** न॰ प्रीत्या भोज्यम् । प्रीत्यैव भोज्ये अन्नादौ "अन्नानि प्रीतिभोज्यानि चापद्भोज्यानि वा पुनः । न च संप्रीयसे राजन् ! न चैवापद्गतावयम्" भा॰उ॰ ६० अ॰। "संप्रीतिभोज्यान्यन्नानि" इति मुद्रितपुस्तके पाठ. ।

**प्रीतिवर्द्धन** त्रि॰ प्रीतिं वर्द्धयति वृध–णिच्–ल्यु । १सन्तोष॰

वर्द्धने २विष्णौ पु० "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस० ।

प्रु सर्पणे भ्वा० आत्म०सक० अनिट् । प्रवते अप्रोष्ट पुप्रुवे ।

प्रुट मर्दने भ्वा० पर०सक० सेट् । प्रोटति अप्रोटीत् पुप्रोट । अयं धातुपाठे पठितः ।

प्रुष भस्मीकरणे भ्वा० पर० सक० सेट् । प्रोषति अप्रोषीत् पुप्रोष । उदित् क्त्वा वेट् । प्रुषित्वा प्रुष्ट्वा प्रुष्टः ।

प्रुष सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर०सेट् । प्रुष्णाति अप्रोषीत् पुप्रोष ।

प्रुष्ट त्रि० प्रुष–क्त । दग्धे । [विन्दौ त्रिका० ।

प्रुष्व प्र० प्रुष–क्वन् । १ऋतौ २सूर्ये च उज्ज्वल० । ३जल-

प्रेक्षा स्त्री प्र+ईक्ष–भावे अङ् । १विषयशुभाशुभपर्यालोचनायां २बुद्धिपूर्वककर्मकरणे ततः प्रेक्षादि० चतुरर्थ्याम् इनि । प्रेक्षिन् आलोचनानिर्द्धारकादौ । अक्षितृशब्दे परे घोषादि० पूर्वपदस्य दान्तम । [प्रेक्षाप्रक्षादयोऽप्यत्र ।

प्रेक्षागार न० ६त० । राज्ञां मन्त्रणार्थगृहे हरिवं० ८५अ०

प्रेक्षादि चतुरर्थ्यामिनि प्रत्ययनिमित्ते शब्दगणः स च गणः पा०ग० उक्तो यथा "प्रेक्षा हलका बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट सङ्कट कटकूप धुक धुक पुट मह परिवाप यवास ध्रुवका गर्त्त कूपक हिरण्य" ।

प्रेक्षावत् त्रि०प्रेक्षा अस्त्यर्थे मतुप् मस्य वः । समीक्ष्यकारिणि ।

प्रेङ्खण न० प्र+इखि–ल्युट् णत्वम् । १प्रकर्षेण चलने अष्टादशरूपकान्तर्गते २रूपकभेदे तल्लक्षणं सा०द० उक्तं यथा "गर्भावमर्षरहितं प्रेङ्खणं हीननायकम् । असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् । नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् । नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना" ।

प्रेङ्खा स्त्री प्र+इखि वा० आधारे अङ् । १दोलायाम् अमरः भावे अङ् । २परिभ्रमणे ३स्वार्थकगतौ अश्वगतौ इति पाठान्तरम् । ४गृहभेदे मेदि० ५नृत्ये च धरणिः ।

प्रेङ्खित त्रि० प्र+इखि–क्त । कम्पिते अमरः ।

प्रेङ्खोल दोलने अद०चुरा०उभ०सक० सेट् । प्रेङ्खोलयति ते अपिप्रेङ्खोलत् त । प्रस्योपसर्गत्वमपीच्छन्तीत्यन्ये तेन प्राञ्चिखोलत् त इत्यं वरूपम् ।

प्रेण गतिप्रेरणाश्लेषणेषु भ्वा०पर० सक० सेट् माधवः । प्रेणति अप्रेणीत् ऋदित् अपिप्रेणत् त ।

प्रेणि त्रि० प्रेण–इन् । प्रेरके ऋ० १।११२।१० भा० ।

प्रेत त्रि० प्र–इ–क्त । १मृते अमरः । २नरकस्थे जीवभेदे ३पिशाचभेदे आतिवाहिकदेहोत्तरं ४जायमानदेहभेदे० युते और्द्ध्वदेहिकक्रियाऽभावे तद्रूपप्राप्तिकथा पाद्मोत्त०ख० १६अ० यथा "ततो बहुतिथे काले स राजा पञ्चताङ्गतः । वैदिकेन विधानेन न लेभे चौर्द्ध्वदेहिकम् । विष्णुप्रदेशमात्रेण युगानां सप्तविंशतिम् । भुक्त्वा च यातनां याम्यां निस्तीर्णनरको नृपः । समया गिरिराजन्तु पिशाचोऽभूत्तदा महान्" । तस्य रूपं यथा "देवद्युतिरधीयानः शुश्राव करुणस्वनम् । समागत्य ततस्तत्र तं पिशाचं ददर्श सः । विकरालमुखं दीनं पिशङ्गनयनं भृशम् । ऊर्द्ध्वमूर्द्धजमक्षाङ्गं यमदूतमिवापरम् । चलज्जिह्वञ्च लम्बोष्ठं दीर्घजङ्घसिराकुलम् । दीर्घाङ्घ्रिं शुष्कतुण्डञ्च गर्त्ताक्षं शुष्कपञ्जरम्" ।

और्द्ध्वदेहिककरणेऽपि केषाञ्चित् कर्मविशेषेण प्रेतत्वप्राप्तिस्तत्रोक्ता यथा "हरिर्जिष्णुरिति नाम्नौ ये गोविन्दं नार्चयन्ति ये । लभन्ते नात्मविद्यासु सुतीर्थविमुखाश्च ये । सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् । आर्त्तेभ्यो न प्रयच्छन्ति सर्वेषु शतदारकाः । ब्रह्मस्वञ्च स्त्रीधनानि लोभादेव हरन्ति ये । बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः । नास्तिकाः कुहकाश्चौरा ये चान्ये वकवृत्तयः । बालवृद्धातुरस्त्रीषु निर्दयाः सत्यवर्जिताः । अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः । अगम्यागामिनः सर्वे ये चान्ये ग्रामयाजिनः । आधाचरणसम्पन्ना वर्णादिधर्मवर्जिताः । ये चोपदेवदनुजरक्षोयक्षादिसेविनः । सर्वदा मादकद्रव्यपानमत्ता हरिद्विषः । देवतोद्दिष्टपतितत्दपश्राद्धान्नभोजिनः । असत्कर्मरता नित्यं सर्वपातकपापिनः । पाषण्डधर्माचरणाः पुरोधोवृत्तिजीविनः । पितृमातृस्वसापत्यस्वदारत्यागिनश्च ये । ये कदर्याश्च लुब्धाश्च नास्तिका धर्मदूषकाः । त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् । गवां भूमेश्च हर्त्तारो ये चान्ये रत्नदूषकाः । महाक्षेत्रेषु सर्वेषु प्रतिग्रहरताश्च ये । परद्रोहरता ये च तथा ये प्राणिहिंसकाः । परापवादिनः पापा देवतागुरुनिन्दकाः । कुप्रतिग्राहिणः सर्वे सम्भवन्ति पुनःपुनः । प्रेतराक्षसपैशाच्यतिर्य्यग्वृक्षकुयोनिषु । न तेषां सुखलेशोऽस्ति इह लोके परत्र च" । पाद्मोत्तरखण्डे १८अ० । पञ्चप्रेतोपाख्यानं तत्रैव यथा "ब्राह्मण उवाच प्रेतानां नाम जातीनां युष्माकं सम्भवः कथम् । किं तत् कारणमुद्दिश्य यूयमीदृग्नामकाः" । प्रेता ऊचुः "अहं स्वादु सदा भुक्त्वा दद्यां पर्युषितं

षदा। एतत्कारणमुद्दिश्य नाम पर्य्युषितं मम। सूचिता बहवोऽनेन विप्राद्या ह्यन्नकाङ्क्षिणः। एतत्कारणमुद्दिश्य सूचीमुख२मिमं विदुः। शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै। पश्चाद्भुङ्क्ते द्विजः शिष्टमेव शीघ्रक३ उच्यते। गृहोपरि सदा भुङ्क्ते स्वादु द्विजभयेन हि। द्विजाय कुत्सितं दत्त्वा एष रोहक४ उच्यते। मौनेनापि स्थिरो नित्यं याचितो विलिखन्महीम्। अस्माकमपि पापिष्ठो लेखको५ नाम एष वै। मेढ्रेण लेखको याति रोहकः पार्श्वतःशिराः। शीघ्रकः पङ्गुतां प्राप्तः सूची सूचीमुखोऽभवत्"। प्रेताहारस्तत्रोक्तो यथा"द्विज उवाच "ये जीवा भुवि तिष्ठन्ति सर्वे आहारमूलकाः। युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः" प्रेता ऊचुः "शृणु आहारमस्माकं सर्वसत्त्वविगर्हितम्। श्लेष्ममूत्रपुरीषेण योषितान्तु मलेन च। गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै। स्त्रीभिर्जग्धानि जीर्णानि संकीर्णापहृतानि च। मलेनातिजुगुप्सानि प्रेता भुञ्जन्ति तत्र वै। भयलज्जाविहीनानि पतितैः सेवितानि च। अन्योन्यदस्युयुक्तानि प्रेता भुञ्जन्ति तत्र वै। कलहान्वितशोकानि त्यक्तशोभानि मण्डनैः। सवर्चस्कानि भाण्डानि प्रेता भुञ्जन्ति तत्र वै। बलिमन्त्रविहीनानि द्विजादृष्टानि यानि तु। नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै। गुरवो नैव पूज्यन्ते स्त्रीजितानि मलानि च। सक्रोधान्यपविलासिनि प्रेता भुञ्जन्ति तत्र वै। भुञ्जन्ति भिन्नभाण्डेषु मर्यादारहितेषु च। अन्योन्योच्छिष्टयुक्तेषु तत्र प्रेतास्तु भुञ्जते। सकेशमाक्षिकोच्छिष्टं पूति पर्युषितं तथा। सक्रोधञ्च सशोकञ्च तच्च प्रेतेषु भोजनम्। सनग्नं भोजनं यच्च नोत्तरीयं पदासनम्। सोष्णीषं सासुरीकञ्च तच्च प्रेतेषु भोजनम्। अर्द्धग्रासं महाग्रासं सोत्च्छिष्टं पतितं तथा। दुर्भुक्तं गोष्ठिकञ्चैव तच्च प्रेतेषु भोजनम्। सौतिकं सूतकञ्चैव राजसं कलुषीकृतम्। निर्दोषं क्षमिवञ्चाग्रे यद्भुक्तं प्रैतिकन्तु तत्। एतत्ते कथितं सर्वं यत् प्रेतेष्वेव भोजनम्। निर्वाणाः प्रेतजात्या वै पृच्छामस्त्वां द्विजोत्तम"। प्रेतत्वाभावकारणं यथा न प्रेतो जायते येन येन चैवेह जायते। एतत्सर्वं समासेन प्रब्रूहि वदतां वर!" ब्राह्मण उवाच "एकरात्रं त्रिरात्रं वा कृच्छ्रं चान्द्रायणादिकम्। व्रतेष्वभ्युषितो यस्तु न प्रेतो जायते नरः। मिष्टान्नपानदाताथ सततं श्रद्धयान्वितः। देवपूजापरो नित्यं न प्रेतो जायते नरः। त्रिरग्निरेकपञ्चाग्निर्निरग्निर्वाप्युपासकः। सर्वभूतदयापन्नो न प्रेतो जायते नरः। तुल्यमानापमानश्च तुल्यः काञ्चनलोष्टयोः। तुल्यः शत्रौ च मित्रे च न प्रेतो जायते नरः। देवतातिथिपूजासु गुरुजातिषु नित्यशः। वेदशास्त्ररतो नित्यं न प्रेतो जायते नरः। जितक्रोधो मदैश्वर्यतृष्णासङ्गविवर्जितः। क्षमाऽक्रोधसुशीलश्च न प्रेतो जायते नरः। देवतातिथिपूजास्तु पर्वतांश्च नदीस्तथा। पश्येद्देवालयांश्चैव न प्रेतो जायते नरः"। प्रेतत्वकारणं यथा "शूद्रान्नं यो द्विजो भुङ्क्ते यः क्रामति द्विजोत्तमम्। हन्तिहा द्विजदेवेषु स प्रेतो जायते नरः। मातरं पितरं वृद्धं ज्ञातिं साधुजनं तथा। लोभात् त्यजति यः स्निग्धं स प्रेतो जायते नरः। अयाज्ययाजकश्चैव याज्यञ्च परिवर्जयेत्। शूद्रानुग्रहकर्ता च स प्रेतो जायते नरः। कुज्योतिषी कुविप्रस्तु कुजनेषु कुदेशकः। शूद्रसेवाकरो राज्ञां स प्रेतो जायते नरः। सेवनायापहृतो यः सेवकस्त्वपरिग्रहः। तावुभावपि जायेते प्रेतौ कालान्न किंप्रदौ। द्विजानुमन्त्रितो भुङ्क्ते शूद्रान्नं वा द्विजस्तु तु। शूद्रेणैव द्विजः प्रेतो निरयानुपगच्छति। गीतवाद्यरतो नित्यं मद्यपस्त्रीनिषेवणात्। द्यूतमांसप्रियो यस्तु स प्रेतो जायते नरः। वृथारेता वृथामांसो वृथावादो वृथामतिः। निन्दको द्विजदेवानां स प्रेतो जायते नरः। वृद्धं बालं गुरुं विप्रं योऽवमन्य भुनक्ति वै। कन्यां ददाति शुल्केन स प्रेतो जायते नरः। न्यासापहर्त्ता मित्रध्रुक् परपाकरतस्तथा। विश्वस्तघाती कूटश्च स प्रेतो जायते नरः। निर्दोषान् सुहृदो नारीस्त्यजेत् कालान्न याति यः। धनमीहेत यस्तेषां स प्रेतो जायते नरः। हस्त्यश्वरथयानानि स्वतशय्यासनादि यः। क्षमाजिनञ्च गृह्णाति अनापत्सुगतो द्विजः। तथोभयमुखीं कालं सशैलां मेदिनीं द्विजः। कुरुक्षेत्रस्य यद्दानं चाण्डालात् पतितात्तथा। माणिक्येऽपि नवश्राद्धे भुञ्जन् प्रेतान्नभुङ्मतः। ब्रह्महा गोबधो स्तेयी सुरापो गुरुतल्पगः। भूमिकन्यापहर्त्ता यः स प्रेतो जायते नरः। नानासङ्करकश्चित्यं वर्णसङ्करकस्तथा। योनिसङ्करकश्चापि स प्रेतो जायते नरः। विक्रीणाति विषं मद्यं तिलानां लवणस्य तु। गवां केशरिणां मोहात् विक्रयात् प्रेततां व्रजेत्। कूटमाप्येन तौल्येन क्रयं क्री-

यांति विक्रयात्। मद्यतक्रपयोदश्चा स प्रेतो जायते नरः। स्त्रीरक्तो मद्यपाने तु स्वगयामनुधावति। नित्यनैमित्तिकेऽदाता स प्रेतो जायते नरः" अग्निपु०। अनुष्ठानाच्च दाहादिक्रिययाऽतिवाहिकदेहानन्तरं प्रेतदेहो भवति यथाह विष्णुधर्मोत्तरे

"तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्। प्रेतपिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव!। भोगदेहमिति प्रोक्तं क्रमादेव न संशयः। प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्। श्मशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते। तत्रास्य यातना घोराः शीतवातातपोद्भवाः। ततः सपिण्डीकरणे बान्धवैः स कृते नरः। पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते। ततः स नरकं याति स्वर्गं वा स्वेन कर्मणा" शु०त०। ५प्राप्तपितृलोके "अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात्" गोभिलः "प्रेतलोकं परित्यज्य आगता ये महालये" ति०त०।

**प्रेतकर्म्मन्** न० ६त०। १मृतोद्देशेन कर्त्तव्ये दाहादि सपिण्डनान्तकर्मणि मा०द्रो०५२अ०। प्रेतकार्य्यादयोऽप्यत्र। २प्राप्तपितृलोकोद्देश्यककार्ये श्राद्धादौ च "अकृत्वा प्रेतकार्य्याणि प्रेतस्य धनहारकः। वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत्" दाय०त० वचनम्।

**प्रेतगृह** न० प्रेतस्य मृतस्य गृहमिव। मृतस्य शरीराधारे श्मशाने हेमच०। प्रेतावासादयोऽप्यत्र।

**प्रेततर्पण** न० ६त०। मृतोद्देशेन वर्षपर्य्यन्तं प्रेतशब्दोल्लेखेन कर्त्तव्ये तर्पणविशेषे तद्विधानं शु०ति० यथा

निबन्धाचार्य्यपृथ्वीधरधृतविष्णुसूत्रम् "अतः सर्वे शवस्पर्शिनो गत्वा पितृपदस्थाने प्रेतपदोहेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चारेण पितृहा भवति"। शातातपः "प्रेतान्तनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्" इति प्रेतान्तेति तत्पुरुषः न बहुव्रीहिः सर्वजघन्यत्वात् तेन प्रेतान्तनाम गोत्रञ्चेति समासः एतद्वचनाच्चिलापिण्डदाने उपतिष्ठतामिति पितृदयितायामप्युक्तम्। एतेन प्रेतकार्ये समस्तार्थकपदप्रयोगो मैथिलोक्तो हेयः। एतेनामुकगोत्रममुकदेवशर्म्माणं तर्पयामीति सामगानां प्रयोगः। अत्र प्रेततर्पणे सतिलत्वेति विशेषोपादानात् सूर्य्यादिवारेऽपि तिलैरेव तर्पणं प्रतीयते। अतएवाह मदनपारिजातधृता स्मृतिः "अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारे च न दोषस्तिलतर्पणे"। तथा "तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा"। तिथिविशेषे अमावस्यादशहरादौ। अत्र दक्षिणाङ्गुष्ठसहितमध्यमादिना वामहस्ते तिलदानं "वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। सव्यहस्तस्तु कर्त्तव्यं न मुद्रां तत्र दर्शयेत्" इति विद्याकरधृतवचने वामहस्त इति सप्तम्यन्तश्रवणात् "तिलान् संमिश्रयेज्जले" इति तिलाधिकरणस्योपक्रम्याभिधानाच्च। "सव्येन च तिलाः ग्राह्याः" इत्यत्रापि वामहस्ते स्थाप्या इत्यर्थः। सव्येनेति स्थाल्या पचतीतिवदधिकरणे तृतीया "विवक्षातो हि कारकाणि भवन्ती"त्युक्तेः। मुद्रा अङ्गुष्ठतर्जन्यात्मकयोगरूपा तिलग्रहणायेति शेषः"।

**प्रेतधूम** पु०६त०। चिताधूमे मनुः ४।६९। [नदीभेदे शब्दच०।

**प्रेतनदी** स्त्री प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके

**प्रेतनिर्हारक** पु० प्रेतं निर्हरति गृहात् श्मशानभूमिं निर्+हृ-ण्वुल्। शवहारके "प्रेतनिर्हारकाश्चैव वर्जनीयाः प्रयत्नतः" तस्य अपाङ्क्तेयता मनुनोक्ता। तच्च कुल्लू० धनग्रहणपूर्वकहरणपरतया व्याख्यातं यथा "प्रेतनिर्हारको धनग्रहणेन न तु धर्मार्थम्। "एतद् परमन्तपो यत् प्रेतमरण्यं हरन्तीति" श्रुत्या विहितत्वात्"

**प्रेतपक्ष** पु० प्रेतानां पितृणां प्रियः पक्षः शा०त०। गौणाश्विनकृष्णपक्षे अत्र मृतयोः पित्रोः पार्वणविधिना त्रैपुरुषिकं श्राद्धं करणीयं यथाह शा०त० शङ्खः

"सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि। अमावस्यां क्षयो यस्य प्रेतपक्षेऽथ वा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः"। त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यादित्यर्थः। मृताहपर्युदस्तनिर्दिष्टत्वस्य प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः आश्वयुककृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् "नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः"। अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ़ापेक्षया सप्तमपक्षस्य पितृपक्षत्वात् अत्र मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षे मृतस्य। ततश्च तत्र मृतस्य

वर्षान्तरेऽप्ययुक्तत्वा च्चेऽपि तच्छ्राद्धकरणे न पार्व्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणो विधिः पार्व्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः । तत्र पूर्व्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणोविधिरित्यनेन प्रतिप्रसवात् । तस्मात् सदैकोद्दिष्टं त्रैपुरुषिकं न तु षाट्पौरुषिकं "कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् । प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् एवममावस्यादिमरणनिमित्तेन मातरपि प्रत्याब्दिकं पार्व्वणविधिनैव "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्" इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात् । एतच्च मातादित्रितयदैवतं कार्य्यम् । "मातृ पितामही प्रपितामही पूर्व्ववत् ब्राह्मणान् भोजयित्वा" इत्यन्वष्टकायां तथादर्शनात् अवसानदिननिमित्तत्वेन पार्व्वणविधिना छन्दोगैरपि मातादित्रिकाणां श्राद्धं कर्त्तव्यम् "न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते" । इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डीकरणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रोरेव । तथा च हेमाद्रिधृतकात्यायनवचनम् "सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु" । मातृपदं सपत्नीमातृपरम् । सपत्नीमात्रित्यत्र मातृपदस्य राजदन्तादित्वात् परनिपातः ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम् "औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश" इति जावालवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्व्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् । उशना च "प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्व्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः" । अत्र नि°सि° विशेषमाह वृद्धपराशरः "संग्रामे संस्थितानाञ्च प्रेतपक्षे शशिक्षये । तेषां पार्व्वणमेवोक्तं मृताहेऽपि च सत्तमैः" । "चन्द्रक्षयानायकसंयुगेषु यः प्रेतपक्षे मृतवान् सपिण्डः । सपिण्डितानामपि चाब्दिकानि भवन्ति तेषामिह पार्व्वणानि" । तथा "भ्रातुर्ज्येष्ठस्य कुर्व्वीत ज्येष्ठो भ्रातानुजस्य च । दैवहीनं तु तत्कुर्य्यादिति धर्म्मविदब्रवीत्" । दैवहीनमेकोद्दिष्टम् ज्येष्ठो भ्रातानाद्यगर्भजः तथा च तत्रैव शातातपः "अनाद्यगर्भो ज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते । ऋते सपिण्डनात्तस्य नैव पार्व्वणमाचरेत्" । आद्यगर्भे तु पार्व्वणमेकोद्दिष्टं वेत्यर्थः । मातुस्तु हेमाद्रौ कात्यायनः "प्रत्यब्दं यो यथा कुर्य्यात् पुत्रः पित्रे सदा द्विजः । तथैव मातुः कर्त्तव्यं पार्व्वणं चान्यदेव वा" । यत्तु तेनैवोक्तम् "सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु" इति तत् सापत्नमातृपरम् । यत्तु वृद्धपराशरः "अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । स एवास्य तु कुर्व्वीत पिण्डदानादिकक्रियाम् । पार्व्वणं तेन कार्य्यं स्यात् पुत्रवद्भ्रातृजेन तु । पितृस्थाने तु तं कृत्वा शेषं पूर्व्ववदाचरेत्" इति तत्पितृवद्देशाचारवद्व्यवस्थितमिति पृथ्वीचन्द्रः । श्राद्धदीपकलिकायां चतुर्व्विंशतिमते तु "पितृव्यभ्रातृमातृणां ज्येष्ठानां पार्व्वणं भवेत् । एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्व्वणं मिथः । अपुत्रस्य पितृव्यस्य भ्रातुर्वैमात्रजन्मनः । मातामहस्य तत्पत्न्याः श्राद्धं पार्व्वणवद्भवेत्" इत्युक्तं तत्पत्न्याः कर्तृत्वेऽपि पार्व्वणमेव "सर्व्वाभावे स्वयं पत्न्याः स्वभर्त्तॄणाममन्त्रकम् । सपिण्डीकरणं कुर्य्युस्ततः पार्व्वणमेव च" इति लौगाक्षिस्मृतेः । "ततः पत्न्यपि कुर्व्वीत सापिण्ड्यं पार्व्वणं तथेति" सुमन्तूक्तेश्चेति निर्णयामृते उक्तम् । अन्ये त्वेतत्साग्निकपार्व्वणपरमाहुः अतएव "भर्त्तुः श्राद्धं तु या नारी मोहात्पार्व्वणमाचरेत् । न तेन तृप्यते भर्त्ता कृत्वा तु नरकं व्रजेत्" इति वचनं क्षयाहे पाक्षिकैकोद्दिष्टप्रशंसार्थं न पार्व्वणनिषेधार्थमित्युक्तं त्रिस्थलीसेतौ भट्टचरणैः । स्वभर्तृप्रभृतित्रिभ्य इत्यनेन विरोधाच्च अपुत्राणाम् चाह हेमाद्रावापस्तम्बः "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम् । मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च । दद्यादै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा" । पारिजाते तु अन्यथा पार्व्वणमित्युक्ता सर्व्वत्र पार्व्वणमित्युक्तम् एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तम् । पृथ्वीचन्द्रोदये वृद्धगार्ग्यः "मातुः सहोदरा या च पितुः सहभवा च या । तयोश्च नैव कुर्व्वीत पार्व्वणं पिण्डनादृते" प्रचेताः "सपिण्डीकरणादूर्ध्वं

एकोद्दिष्टं विधीयते । अपुत्राणां च सर्वेषामपत्नीनां तथैव च" । अपत्नीनां ब्रह्मचर्य्यादीनाम् । मार्कण्डेयपुराणे "प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः । मृताहनि यथान्यायं नृणां यद्वदिहोदितम्" । नृणामिति दृष्टान्तात् गोविप्रहतपाषण्ड्यादीनां सपिण्डनाभावेऽपि सांवत्सरमेकोद्दिष्टं कार्यमेवेति शूलपाणिः । वृद्धवसिष्ठौ "सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च । पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्व्वणम्" । यत्तु जातूकर्ण्यः "पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च । मातामहस्यापुत्रस्य श्राद्धादि पितृवद्भवेत्" इति तदावश्यकत्वार्थं न तु पार्व्वणार्थमिति हेमाद्रिः । युक्तन्त्वेवम् "मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः । तेषां तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनवः" इति पुलस्त्योक्तेर्मातामहस्य पार्व्वणमेव तत्साहचर्य्यात् पितृव्यादौ तथा "पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्व्वणमिति" क्षयाहोपक्रमे पुलस्त्योक्तेश्च विकल्पः । केचित्त्वापस्तम्बादिवाक्यानि "व्युत्क्रमाच्च प्रमीतानां नैव कार्य्या सपिण्डता" इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादिपराणीत्याहुः । माता सपत्नीमाता । एकोद्दिष्टं तु कनिष्ठपरमिति पृथ्वीचन्द्रोदयेऽप्येवम् । विशेषस्त्वधिकारिनिर्णये प्रागुक्तः । केचित्तु पुत्राभावेऽपि पितामहवार्षिकमप्यावश्यकम् "पुत्राभावे च तत्पुत्रः पत्नी माता तथा पिता । वित्ताभावेऽपि सच्छिष्यः कुर्य्यात्तस्यौर्द्ध्वदैहिकम्" इति मार्कण्डेयपुराणादित्याहुस्तन्न "पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशमिति" कातीये विशेषोक्तेः ।

प्रेतपक्षे श्राद्धकालादिनिरूपणम् श्रा॰वि॰ यथा ब्रह्मपुराणे "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा । न सन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते । यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावत् श्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा" । दिने दिने इति वीप्सया पक्षश्राद्धार्थो तेन पञ्चदश श्राद्धानि दर्शितानि । ननु तिथिह्रासादेकस्मिन्नेव पक्षे चतुर्दशत्वादह्नां चतुर्दश श्राद्धानि प्राप्नुवन्ति । एवं तिथिवृद्ध्याहर्वृद्धौ षोडश स्युः । न पञ्चदशतिथ्यात्मकत्वाच्चान्द्रपक्षस्य दिने दिने पञ्चदशतिथिष्वित्यर्थः तथा च एकस्मिन् दिने श्राद्धयोग्यतिथिद्वयलाभे श्राद्धद्वयम् अहोरात्रवृद्धौ न श्राद्धवृद्धिः । तथा च विष्णुधर्मोत्तरप्रथमकाण्डम् "तिथिनैकेन दिवसश्चान्द्रमानेन कीर्त्तितः । अहोरात्रेण चैकेन सावनो दिवसः स्मृतः" । त्रिभागहीनं पक्षं वा इति षष्ठ्यादिकल्प उक्तः त्रिभागमित्येकादश्यादिकल्प उक्तः अर्द्धमेवेति त्रयोदश्यादिकल्पः । न तु अर्द्धमिति पक्षार्द्धमिति व्याख्यानं कल्पतरूक्तं युक्तम् उत्तरोत्तरलघुकालोपदेशात् सन्निधानाच्च त्रिभागार्द्धप्रतीतेः । त्रिभागहीनत्रिभागपदयोरपि पञ्चम्यादिविवेचनं कल्पतरोर्न युक्तमेव पक्षापेक्षया पञ्चम्यादेस्त्रिभागहीनादिपदार्थत्वानुपपत्तेरसुस्थत्वात् । गौतमोक्तपञ्चम्यादिकल्पस्य सामान्योपक्रमाच्चाश्वयुक्परत्वम् । अतएव विष्णुधर्मोत्तरप्रथमकाण्डम् "उत्तरायणात् श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम् । चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम् । प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः । पञ्चम्यूर्द्ध्वञ्च तत्रापि दशम्यूर्द्ध्वमतोऽप्यति । मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी" । पञ्चम्यूर्द्ध्वं दशम्यूर्द्ध्वमित्यनेन षष्ठ्याद्येकादश्यादिकल्पावुक्तौ । न सन्तीत्यनेनाकरणे प्रत्यवायदर्शनं नित्यत्वज्ञापनार्थं तत्र च पक्षश्राद्धादिकल्पानां विषमशिष्टत्वेनेच्छाविकल्पाऽसम्भवादेकादेया तिस्रो देयाः षड्देया इतिवत् फलभूमा कल्पनीयः । एतेषामेव कल्पानां दर्शितत्वादाश्विने कृष्णपक्षे एकस्मिन्नपि दिने श्राद्धं कर्त्तव्यमिति पक्षश्चिन्तनीयः सामान्यमासविहितन्तु स्यादेव । अत्र संशयः प्रौष्ठपद्यूर्द्ध्वं यः कृष्णपक्षः स पौर्णमास्यन्तमासव्यवस्थयाऽश्वयुक्कृष्णपक्षो भवति स यदा कन्योपक्रमः कन्यासमाप्यश्च तदा तत्र पक्षश्राद्धमविवादमेव यदा सिंहोपक्रमः कन्यासमाप्यश्च समस्त एव वा सिंहसमाप्यः तदा कीदृशः शास्त्रार्थः । अत्र जिकनप्रभृतयः ब्रह्मपुराणादिवचनैरेवात्र व्यवस्थां दृष्टव्यामाहुः । यथा ब्रह्मपुराणम् "यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा" । तथा भविष्यपुराणे "कन्यां गते सवितरि पितृराजानुशासनात् । तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् । ततो वृश्चिक आयाते निराशाः पितरो नृप ! । पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् । हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्हणम् । सूर्ये कन्यास्थिते श्राद्धं यो न कुर्य्याद्गृहाश्रमी । कुतस्तस्य धनं

पुत्राः पितॄन् निःश्वासपीड़नात्"। हंसे सूर्ये इति। ऋणमिव ऋणं पितृमातृकुलस्येदमवश्यं परिशोध्यम् इत्यर्थः एवमादिवचनैः कन्यासम्बन्धेनैव श्राद्धप्रतिपादनात् एतस्यापि वचनस्य तदेकवाक्यतया सौराश्विनपरत्वम्। सौरपरत्वे लक्षणा स्यादिति चेन्न पौर्णमास्यन्तेऽपि तथात्वात्। अतः सिंहोपक्रमे कृष्णपक्षे कन्यासम्बन्धिन्येव भागे श्राद्धं स्यात् न सिंहसम्बन्धिनि अतः पक्षश्राद्धं तत्र निवर्त्तत एव त्रिभागहीनमित्यादयः पक्षास्तत्र यथासम्भवं योजनीयाः। कन्यासम्बन्धिन्यपरपक्षे श्राद्धविधानात् उपक्रमे सिंहसम्बन्धेऽपि पक्षस्य कन्यासम्बन्धोऽस्त्येवेति चेन्न एकस्य पक्षावयविनः पञ्चदशतिथ्यात्मकस्याभावात् अत एव पञ्चदशब्राह्मणसमुदायमध्ये एकस्य पुरुषोत्तमस्पर्शे न सर्वेषां पुण्यभागिता एतन्मूलमेवेदं वचनं "कृत्तिकादिभरण्यन्तं वारा वा रविसप्तकाः। नैते संयोगमात्रेण पुनन्ति सकलां तिथिम्"। एकस्य तिथ्यवयविनोऽभावादित्यर्थः इतरथा तु पूर्वदिने रात्रौ चतुर्थीभौमवारयोगे बुधवारेऽपि भौमयुक्तचतुर्थीविहितस्नानदानाद्यापत्तेः। यदा समस्त एवापरपक्षः सिंहार्के निपतेत् तदा तं पक्षं विहाय कन्यागतापरपक्ष एव श्राद्धम्। नन्वेवं पञ्चमपक्षविरोधः। तथा कार्ष्णाजिनिः "शक्रध्वजनिपाताद्धो यः स्यात् पक्षस्तु पञ्चमः। स विज्ञेयोऽपरः पक्षः श्राद्धं तत्र विधीयते। पुत्रमायुर्धनं धान्यं भूतिमारोग्यमेव च। प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथा परान्। एतानेव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत्। तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम्"। तथा जातूकर्ण्यः "आषाढीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः। तत्र श्राद्धं प्रकुर्वीत कन्यां गच्छतु वा न वा"। जाबालः "अगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत यत्नतः। आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्मणि"। उच्यते एतेषां वचनानां भोजदेवप्रभृतिभिरलिखितत्वेन प्रामाण्याभावात् प्रत्युत पुत्रादिफलसम्बन्धावगमात् काम्यं तद्भविष्यति। कन्यागतस्य च नित्यत्वं प्रागेव दर्शितम्। न च काम्याधिकारनित्याधिकारयोरेकशास्त्रार्थत्वं यावज्जीवाधिकरणविरोधात्। तद्यदि फलार्थितया कन्यासम्बन्धरहित एव श्राद्धं कृतं तथापि कन्यायामवश्यं कर्त्तव्यम्। वस्तुतस्तु श्राद्धभेदे विधिगौरवापत्तेः कन्यागतश्राद्ध एव फलार्थितया पञ्चमपक्षस्य गुणफलविधिः तदा च केवलपञ्चमपक्षे श्राद्धमसङ्गतमेव "कन्यां गच्छतु वा नवेति" पञ्चमपक्षस्तुत्यर्थं न तु कन्यासम्बन्धाभावेऽपि श्राद्धविधानपरं प्राप्ते कन्यागतश्राद्धे गुणफलविधित्वात् तदसङ्गतं ब्रह्मपुराणे "पौर्णमास्यन्तमासेनैव समस्ततिथिकृत्याभिधानात् अश्वयुक्शब्दस्यापि पौर्णमास्यन्तपरत्वात् न सौराश्विनपरत्वम् "आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च" इति ब्रह्मपुराण एव अश्वयुक्शब्दस्यापि पौर्णमास्यन्तपरत्वावधारणाच्च पौर्णमास्यन्ताश्विन एव मघा त्रयोदशी भवति न दर्शान्ते, लक्षणा च सौरेऽप्यविशिष्टा। अतएव न मुख्यत्वाय दर्शान्तपरतापि कृत्स्नतात्पर्य्यानुपपत्त्या लक्षणायाधान्यमस्यधिकरणे दर्शितत्वात्। इदन्तु उच्यते उक्तयुक्तेः पौर्णमास्यन्ताश्विनपरत्वे कन्यानिरपेक्षपञ्चमपक्षे पक्षश्राद्धादिकृत्यं नित्यतयाऽवगम्यन्ते न कन्याविशिष्टा निरपेक्षश्रुतेः अत एव न गुणफलविधिः। अत एव कन्यासम्बन्धानुद्देशेनैव प्रौष्ठपद्यूर्ध्वं पञ्चमपक्षे कृष्णपक्षश्राद्धादिकं दर्शयति विष्णुधर्मोत्तरप्रथमकाण्डम् "उत्तरायणात् श्राद्धं श्रेष्ठं स्यात् दक्षिणायनम्। चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्। प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः। पञ्चम्यूर्द्ध्वञ्च तत्रापि दशम्यूर्ध्वमतोऽप्यति। मघा युक्ता च तत्रापि शस्ता राजंस्त्रयोदशी। तत्राक्षयं भवेत् श्राद्धं मधुना पायसेन तु। सर्वस्वेनापि कर्त्तव्यं श्राद्धमत्र नराधिप!। परान्नभोजी त्वपचः श्राद्धमत्र तु कारयेत्"। यानि च कन्याविषयाणि वचनानि तानि पञ्चमपक्षानपेक्षश्राद्धान्तरविधायकान्येव। कन्याप्रौष्ठपद्यूर्द्ध्वपञ्चमपक्षसमुच्चयेऽपि कन्यागतस्यापि श्राद्धस्य नित्यत्वेनावगम्यमानस्य तन्त्रादेव सिद्धेर्न पृथक्करणम्। यदा न कन्यासमुच्चयस्तदा कन्यायामपि नित्यत्वात् कर्त्तव्यमेव परन्तु पक्षश्राद्धादिकल्पेषु प्रामाणाभावात् सकृत् कृते कृतः शास्त्रार्थ इति न्यायात् सकृदेव श्राद्धं कर्त्तव्यम्। अधिमासपाते तत्र श्राद्धं न कर्त्तव्यं यथा लघुहारीतः "सपिण्डीकरणादूर्द्ध्वं यत्किञ्चित् श्राद्धिकं भवेत्। इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्यान्मलिम्लुचे"। एवमधिमासदोषेणापाटवादिना च तत्र श्राद्धाकरणे तुलायां कर्त्तव्यतामाह ब्रह्मपुराणे "यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा"। अत्र कन्यातुलयोर्दिवाकरावस्थितेः क्रमादेव प्राप्तत्वात् क्रमात् श्राद्धस्य कालः स्यादित्यन्वयः मुख्यकल्पानुकल्पभावेनेत्यर्थः।

यस्य या मृततिथिस्तस्य प्रेतपक्षे तत्सजातीयतिथिः पौर्णमासीमृतस्य तु प्रौष्ठपद्येव पार्वणश्राद्धकालः इति हेमाद्रिप्रभृतिव्यवस्थेति पाश्चात्यदाक्षिणात्यानां तथाचारः। प्रा०वि० तन्मूलवचनानाममूलकत्वमुक्तमतोवङ्गानां न तथाचार इति बोध्यम्। अधिकमपरपक्षशब्दे २११ पृ० दृश्यम्। [वाद्यभेदे त्रिका०।

**प्रेतपटह** प्रेतस्य प्रेतत्वसूचकः पटहः। मरणकालवादनीये

**प्रेतपति** पु० ६त०। यमराजे

**प्रेतपर्वत** पु० प्रेतोद्धारणार्थः पर्वतः। गयातीर्थस्थे स्वनामख्याते पर्वते वायुपु० गयाप्र०।

**प्रेतपिण्ड** पु०प्रेताय देयः पिण्डः। पूरकपिण्डे तस्य प्रेतस्य पिण्डरूपदेहविशेषपूरकत्वात् पूरकसंज्ञा यथोक्तं ब्रह्मपु० "शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः। गलांसभुजवक्षांसि तृतीयेन तथा क्रमात्। चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च। जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः। दन्तलोमाद्यष्टमेन वीर्य्यं च नवमेन तु। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः"।

**प्रेतपुर** न० ६त०। यमालये "शून्यं प्रेतपुरं भवेत्" ब्रह्मपु०

**प्रेतमेध** पु० ६त०। पितृदेश्यके श्राद्धरूपे यज्ञे।

**प्रेतराक्षसी** स्त्री प्रेतस्य भूतभेदस्य राक्षसीव दूरतोऽपसर्पणकारित्वात्। तुलस्यां रत्नमाला।

**प्रेतराज** पु० ६त० टच्समा०। यमे तस्य मृतस्य शुभाशुभफलविभजनेन शासनात् तथात्वम्।

**प्रेतलोक** पु० ६त०। यमलोके "प्रेतलोकं परित्यज्य आगता ये महालये" उल्कादानमन्त्रः।

**प्रेतवन** न० प्रेतानां मृतानां वनमिवाधारत्वात्। श्मशाने हेमच०। प्रेतकाननादयोऽप्यत्र।

**प्रेतवाहित** त्रि० ३त०। भूताविष्टे त्रिका०।

**प्रेतशिला** स्त्री गयातीर्थस्थे प्रेतोद्धारणार्थे गृध्रकूटपर्वतादिस्थे शिलाभेदे वायुपु०गयाप्र०। गरुडपु०८५अ० तन्माहात्म्यादि यथा "येयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थिता। प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि। धर्मेण धारिता भूत्यै सर्वदेवमयी शिला। प्रेतत्वं ये गता नृणां पित्राद्या बान्धवादयः। तेषामुद्धरणार्थाय यतः प्रेतशिला ततः। अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा। तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोकगाः। गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः। मुण्डपृष्ठो गिरिस्तस्मात् सर्वदेवमयो ह्ययम्। मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः। अरविन्दवनन्तेषु तेन चैषोपलक्षितः। अरविन्दगिरिर्नाम क्रौञ्चपादाङ्कितो यतः। तस्माद्गिरिः क्रौञ्चपादः पितॄणां ब्रह्मलोकदः। गदाधरादयो देवा आद्या आदौ व्यवस्थिताः। शिलारूपेण च व्यक्तास्तस्माद्देवमयी शिला। गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला। स्नात्वा प्रेतशिलादौ तु वरुणाम्बु स्मृतेन च। पिण्डं दद्यादिमैर्मन्त्रैराबाह्य च पितॄन् परान्"।

**प्रेतशुद्धि** स्त्री प्रेते सति कालविशेषे शुद्धिः। विप्रादीनां मृतानां मरणनिमित्ताशौचापगमे शुद्धौ "प्रेतशुद्धिं प्रवक्ष्यामि" मनुनोपक्रम्याशौचरूपतद्विरोधिनो दर्शनेन तदपगमे शुद्धिः प्रतिपादिता।

**प्रेतशौच** न० प्रेते सति शौचम् ६त०। प्रेते सति तन्निमित्ताशौचापगमे १शौचे २प्रेतसंस्कारभेदे च तत्प्रकारः गरुडपु० १०६अ० उक्तो यथा

"प्रेतशौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः!। ऊनद्विवर्षं निखनेन्न कुर्यादुदकन्ततः। आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः। यमसूक्तं तथा जप्यं जपद्भिर्लौकिकाग्निना। स दग्धव्य उपेतश्चेदाहिताग्न्याप्त्यर्थवत्। सप्तमाद्दशमाद्वापि ज्ञातयो ह्युपयन्त्यपः। अप नः शोशुचदघमनेन पितृदिङ्मुखाः। एवं मातामहाचार्यप्रेतानाञ्चोदकक्रियाः। कामोदकाः सखिपुत्रस्वस्रीयश्वशुरर्त्विजः। नामगोत्रेण ह्युदकं सकृत् सिञ्चन्ति वाग्यताः। पाषण्डपतितस्तेना न कुर्युरुदकक्रियाम्। न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा। सुरापास्त्वात्मघातिनो नाशौचोदकभाजनाः। अतो न रोदितव्यं हि त्वनित्या जीवसंस्थितिः। क्रिया कार्य्या यथाशक्ति ततो गच्छेद् गृहान् प्रति। विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः। आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः। प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्। क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्। पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्। जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये। वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदिताः"।

**प्रेतश्राद्ध** न० प्रेतोद्देश्यकं श्राद्धम्। प्रेतोद्देश्यके आद्यश्राद्धादिसपिण्डीकरणान्तश्राद्धे तस्य गौणकालादि ति०त० उक्तम् यथा "मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्याद्विचक्षणः"। तथा श्रा०त० दर्शितं यथा
"षोडशश्राद्धानां यत्पतितं कृष्णैकादश्यां तत्कर्त्तव्यम्। तथा च लघुहारीतः "श्राद्धविघ्ने समुत्पन्ने मृताहाऽविदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः"। विशेषत इत्यमावस्यापेक्षया तस्यामपि विघ्नादौ विधानात्। यथा हेमाद्रिधृतं षट्त्रिंशन्मतम् "मासिके चाब्दिके चैव संप्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे चापि विचक्षणैः"। राजमार्त्तण्डे "श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः। श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते तथा। अमावस्यां प्रकुर्वीत वदन्त्येके मनीषिणः"। अत्र मृतसूतकोपदानात् कल्पतरुवचनेऽशौचपदमेतत्परम्। यच्चान्तरा मृतसूतकेऽप्येकादश्यां श्राद्धविधानं तत् "देये पितॄणां श्राद्धे तु अशौचं जायते यदि। तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते। शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते। सा तिथिस्तस्य कर्त्तव्या नत्वन्या वै कदाचन" इति कल्पतरुवचनविरोधात् अशौचान्तदिने मलमासादिरूपविघ्नान्तरेण तदकरणे। अतएव श्राद्धविवेके अपाटवाद्यशौचाभ्यामपि पतितमेकोद्दिष्टमेकादश्यामशौचान्ते च मलमासे न कर्त्तव्यं किन्तु मलमासाव्याप्रकृष्णैकादश्यामेवेत्युक्तम्"।

**प्रेति** पु० प्रकर्षेण इतिर्गमनं देहेऽस्य। १अन्ने यजु० १५।६ वेददी०। प्र+इ—भावे क्तिन्। २मरणे स्त्री ऋ०१।३३।४भा०

**प्रेतीषणि** त्रि० प्राप्तगमने ऋ० ६।१।८

**प्रेत्य** अव्य० प्र+इ—ल्यप्। १लोकान्तरे अमरः "प्रेत्य संज्ञा नास्ति" श्रुतिः। २मृत्वेत्यर्थे प्रकर्षेण देहत्यागेन अन्यदेहं गत्वेत्यर्थे च। प्रेत्यजातिः प्रेत्यभावः।

**प्रेत्यजाति** स्त्री प्रेत्य मृत्वा जातिर्जन्म। मृत्वा जन्मनि।

**प्रेत्यभाव** पु० प्रेत्य मृत्वा भावः। मरणोत्तरं पुनर्जन्मनि। "पुनरुत्पत्तिः प्रेत्यभावः" गौ०सू० १।१।१९ "उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य सम्बद्धस्य सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः पुनरित्यभ्यासाभिधानम् यत्र क्वचित् प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान् देहादीन् जहाति तत् प्रैति यत् ततोऽन्यत्र देहादीनन्यानुपादत्ते तद्भवति प्रेत्यभावो मृत्वा पुनर्जन्म सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति" वात्स्या०। प्रवाहरूपेणानादिसम्बन्धः संसारः प्रेत्यभावः यथोक्तं कणा० सू० उप०वृ० "इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः" "तत्संयोगो विभागः"सू० "इदानीं धर्माधर्मयोः प्रयोजनं प्रेत्यभावमाह। ताभ्यां धर्माधर्माभ्यां संयोगोजन्म अपूर्वाभिः शरीरेन्द्रियवेदनाभिः सम्बन्धः संयोग इहोच्यते विभागस्तु शरीरमनोविभागो मरणम् तथा चायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्माधर्मा०भ्यामित्यर्थः अस्यैव च प्रेत्यभावस्याजरञ्जरीभाव इति वैदिकी संज्ञा"। "जातस्य च ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" गीतायां च जन्ममरणप्रवाहस्य ध्रुवत्वमुक्तम्।

**प्रेत्वन्** पु० प्र+इ—क्वनिप्। १इन्द्रे २वाते मेदि०।

**प्रेमन्** पु०न०प्रियस्य भाव इमनिच् प्रादेशः एकाच्कत्वात् न टिलोपः। १सौहार्दे २स्नेहे ३हर्षे मेदि०(वायौ इन्द्रे) शब्दस्तोमोक्तिः प्रामादिकी। "यद्भावबन्धनं यूनोः स प्रेमा परिकीर्त्तितः" उज्ज्वलमण्युक्ते ४भावबन्धभेदे पु०

**प्रेमपातन** न० प्रेम्णा स्नेहेन पातनं यस्य। १नेत्रजले २तदुपलक्षिते लोचने शब्दच०।

**प्रेमबन्ध** पु० ६त०। गाढानुरागे।

**प्रेमभक्ति** स्त्री प्रेम्णा भक्तिः। शोलक्ष्णे प्रेम्णा स्नेहेन भक्तौ तल्लक्षणं नारदपञ्चरात्रे उक्तं यथा "अनन्यममता विष्णौ ममता प्रेमसंप्लुता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैरिति"। प्रेमभक्तेश्च माहात्म्यं भक्तेर्माहात्म्यतः परम्। सिद्धमेव यतो भक्तेः फलं प्रेमैव निश्चितम्"। तच्चिह्नानि भाग०७स्क० उक्तानि यथा "निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि। यदाऽतिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति च। यदा ग्रहग्रस्त इव क्वचिद्धसति क्रन्दते ध्यायति वन्दते जनः। मुहुः श्वसन् वक्ति हरे! जगत्पते! नारायणेत्यात्ममतिर्गतत्रपः। तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुशयाकृताकृतिः। निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम्"।

**प्रेमिन्** त्रि० प्रेमास्त्यस्य ब्रीह्या० इनि टिलोपः। प्रेमयुते

**प्रेयस्** त्रि० अतिशयेन प्रियः प्रिय+ईयसुन् प्रादेशः एकाच्कत्वात् न टिलोपः। प्रियतमे स्त्रियां ङीप् "प्रेयस्यपि प्रोज्झिता" प्रबोधच०। १पत्यौ पु० २भार्य्यायां स्त्री हेम०।

**प्रेरक** त्रि० प्र+ईर–ण्वुल्। प्रयोजके प्रवृत्त्यनुकूलव्यापार-साधके।

**प्रेरण** न० प्र+ईर–णिच्–ल्युट्। प्रेषणे निकृष्टस्य भृत्यादेः कार्य्यादौ नियोगे। णिच्–युच्। प्रेरणाप्यत्र स्त्री।

**प्रेर्वन्** पु० प्र+ईर–वनिप् तुट् च। १सागरे २नद्यां स्त्री ङीप् वनोर च। प्रेर्वरी उज्ज्वलद०।

**प्रेष** गतौ भ्वा०पर० सक० सेट्। प्रेषति अप्रेषीत्। ऋदित् चङि न ह्रस्वः। अपिप्रेषत् त।

**प्रे(प्रै)ष** पु० प्र+इष–घञ् वृद्धिः ईष–वा घञ् गुणः। १प्रेषणे २पीडने च जटा०।

**प्रेषण** न० प्र+इष–ल्युट्। प्रेरणे नियोगे। णिच्–युच्। प्रेषणाऽप्यत्र स्त्री। प्रेषणेन जीवति वेतना० ठक्। प्रैषणिक तदुपजीविनि त्रि०। प्रेषणं नित्यमर्हति छेदा० ठक्। प्रैषणिक नित्यप्रेषणार्हे त्रि०।

**प्रेष्ठ** त्रि०अतिशयेन प्रियः प्रिय+इष्ठन् प्रादेशः एकाच्कत्वात् न टिलोपः। १प्रियतमे अमरः। स्त्रियां टाप्। सा च २प्रियतमायां ३जङ्घायाञ्च शब्दच०।

**प्रे(प्रै)ष्य** त्रि०प्र+इष–कर्म्मणि ण्यत् वृद्धिः ईष–वा ण्यत् गुणः। १प्रेरणीये नियोज्ये २दासे अमरः। भावे यत्। ३प्रेरणे न० तत्करोति कृ–ट। प्रेष्यकर नियोगकारके "यन्तुः प्रेष्यकराहयः" भा०द्रो० २२अ०।

**प्रेहिकटा** स्त्री प्रेहि कट इत्युच्यते यस्यां क्रियायाम् मयू० स०। कटसम्बोधनक प्रगमनार्थक्रियानियोगे।

**प्रेहिकर्दमा** स्त्री प्रेहिकर्दम इत्युच्यते यस्यां क्रियायाम् मयू०स०। कर्दमसम्बोधनकप्रगमननियोगे। एवं प्रेहि-द्वितीया प्रेहिवाणिजा एतावपि शब्दौ मयू० समा०। द्वितयवाणिजसम्बोधनकप्रगमननियोगक्रिययोः। [स्त्रीहे

**प्रैय** न० प्रियस्य भावः पृथ्वा० इमनिचोऽभावे अण्। प्रियत्वे

**प्रैयव्रत** त्रि० प्रियव्रतस्येदम् अण्। प्रियव्रतसम्बन्धिनि वैवस्वतमनोः पुत्रभेदे अपत्ये तु इञ् प्रैयव्रति तत्रार्थे पु०।

**प्रैष** पु० प्र+इष घञ् वा पररूपाभावः। १क्लेशे २मर्दने ३उन्मादे ४प्रेरणे च मेदि०।

**प्रोक्त** न० प्र+वच–गौणे कर्मणि, तस्याविवक्षायां मुख्ये वा कर्म्मणि क्त। १कथिते यं प्रति किञ्चित् वस्तु कथ्यते तस्मिन् २यथेन्मुख्यकर्म्मणि पदार्थे च।

**प्रोक्षण** न० प्र+उक्ष–भावे ल्युट्। १यज्ञार्थे पशुहनने अमरः। २वधे ३सेचने च मेदि०। ४उत्तानहस्तेन जलादेः सेचने अभ्युक्षणशब्दे २१२पृ० दृश्यम्। प्रो-क्ष्यतेऽनया करणे ल्युट् ङीप्। ५प्रोक्षणसाधनेषु अप्सु स्त्री "अवक्षुरे प्रोक्षणीर्निधाय" कात्या० श्रौ० २।२४० "याभिरद्भिर्हविषः पुरोडाशानाञ्च प्रोक्षणं क्रतं ताः प्रोक्षण्यः" कर्कः। उपचारात् ७तदाधारपात्रान्तरे स्त्री।

**प्रोक्षित** त्रि० प्र+उक्ष–कर्म्मणि क्त। १सिक्ते २निहते मेदि० यज्ञार्थं संस्कृते ३पश्वादौ च "भक्षयेत् प्रोक्षितं मांसम्" इति स्मृतिः "आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः। अगस्त्येन पुरा राजन्! मृगया येन पूज्यते" ति०त०।

**प्रोज्जासन** न० प्र+उद्+जस–णिच्–ल्युट्। मारणे हेमच०

**प्रोञ्छन** न० प्र+उञ्छ–ल्युट्। मार्जने (पोँछा)।

**प्रोज्झित** त्रि० प्र+उज्झ–कर्म्मणि क्त। प्रकर्षेण त्यक्ते "धर्म्मः प्रोज्झितकैतवोऽत्र" भाग०१।१।२ श्लो० "तत्र प्रशब्देन मोक्षाभिसन्धिरपि निरासितः" श्रीधरः।

**प्रो(प्रौ)ढ** त्रि० प्र+वह–क्त वा वृद्धिः। १वृद्धे अमरः २प्रगल्भे हेमच० ३निपुणे राजनि०। ४प्रकर्षेण ऊढे च। स्त्रियां टाप्। सा च ५नायिकाभेदे नायिकाशब्दे ४०४२ पृ० दृश्यम्। "त्रिंशद्वर्षादूर्द्ध्वं पञ्च पञ्चाशद्वर्षपर्य्यन्तं प्रौढावस्था यथा "आ षोडशात् भवेद्बाला तरुणी त्रिंशता मता। पञ्चपञ्चाशता प्रौढा भवेद्वृद्धा ततःपरम्"। अस्या वश्यत्वकारणं यथा "अलङ्कारादिभिर्बाला तरुणी रतियोगतः। प्रेमदानादिभिः प्रौढा वृद्धा च दृढताडनात्"। तस्या रमणे दोषो यथा "बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी। प्रौढा करोति वृद्धत्वं वृद्धा मरणदा भवेत्" रतिम०। चत्वारिंशद्वर्षयुक्ते ह्रस्वे "षोडशाब्दो युवा प्रौढश्चत्वारिंशद्भिरब्दकैः" तन्त्रसा०। "अर्थवद्ग्रहणेनानर्थकस्येति" परिभाषया ऊढेः पृथगग्रहणाद्वा क्त वति न वृद्धिः किन्तु यथाह तत्र प्रोढवान् इत्येव।

**प्रो(प्रौ)ढपाद** त्रि०प्रौढः पादो यस्य। आसनारोपितपादादिके "आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढपादः स उच्यते। स्नानमाचमनं होमं भोजनं देवतार्चनम्। प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम्" इति छन्दोगप०। "अनेकवाक्षे दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता" इति बौधायनवचनात्तथाविधे आरूढपादोऽपि न कुर्य्यात्" आ०त०।

**प्रो(प्रौ)ढि** स्त्री प्र+वह–क्तिन् वा वृद्धिः। १सामर्थ्ये २सामर्थ्यहेतुके क्रियासु योग्यताध्यवसाये ३हठोक्तौ च प्रौढिवादः।

**प्रोष्ठ** पु० प्र+अठि–गतौ अच् पृषो०। पतद्रुभेदे हारा०।

चतुरङ्गुलप्रस्तारं फालमग्नौ तापयेत्। तत्र प्राङ्विवाकोधर्मावाहनादिहवनान्तं कर्म कृत्वा दक्षिणां दत्त्वा समन्त्रकं प्रतिष्ठापत्रं शोध्यशिरसि निधाय ओम् "त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक!। अथ वा शुद्धभावेषु शीतो भव हुताशन!। त्वमेव सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि"। इत्येतैः फालस्थमग्निमभिमन्त्रयेत्। शोध्यस्तु "त्वमग्ने सर्वभूतानामन्तश्चरसि पावक!। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम" इत्यनेनाभिमन्त्र्याग्निवर्णं फालं जिह्वया सकृत् लिह्यात्। न दग्धश्चेत् शुद्धः"।

**फाल्गुन** पु० फल्गुनीयुक्ता पौर्णमासी अण् सा यत्र मासे जैत्रे वर्षे अर्द्धमासे वा अण्। चैत्रावधिके द्वादशे १स्वनामख्याते मासभेदे २तादृशे पक्षे ३जैत्रे वर्षभेदे च कार्त्तिकशब्दे १६४६ पृ० दृश्यम्। "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभोमत" इत्युक्तेः पौर्णमास्यां फाल्गुनीरूपनक्षत्रत्रययोगात् तथात्वम्। स च मासः त्रिविधः मुख्यगौणचान्द्रसौरभेदात् तत्र कुम्भस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्रः। तथाभूतकृष्णप्रतिपदादिपौर्णमास्यन्तो गौणः, कुम्भस्थरविकः सौरः इति। अयञ्च शब्दः दन्त्यनान्ते मेदिनिकोषे पठितः। फाल्गुने गगने फेने णत्वमिच्छन्ति वर्वराः" कारिकायाम् णत्वमितिकल्पनं मेदिनिविरोधात् प्रामादिकमेव। ४तत्पौर्णमास्यां स्त्री ङीप्। ५अर्जुनाख्ये पाण्डवे तन्नामकत्वकारणम् भा०वि०४४अ०उक्तं यथा "उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा। जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः"। ६अर्जुनवृक्षे पु० मेदि०।

**फाल्गुनानुज** पु० फाल्गुनादनुजायते अनु+जन—ड। १चैत्रे मासि २वसन्तकाले हारा०। ३नकुलसहदेवयोः द्वि० व०।

**फाल्गुनिक** पु० फाल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठक्। चैत्रावधिके द्वादशे मासे। [३कोषे शब्दर०

**फि** पु० फल—वा० डि। १निष्फलवाक्ये २पापे च एकाक्ष०को०

**फिङ्गक** पु० कलिङ्ग+पृषो०। (फिङा) पक्षिभेदे शब्दमा०।

**फिरङ्ग** पु० स्वनामख्याते म्लेच्छदेशे१ रोगविशेषे२ भावप्र० तत्र फिरङ्गस्य निरुक्तिमाह। "फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत्। तस्मात् फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः"। तस्य विप्रकृष्टं निदानमाह "गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम्। फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः प्रसङ्गतः। व्याधिरागन्तुजो ह्येष दोषाणामनुसंक्रमः। भवेत्तां लक्षयेत्तेषां लक्षणैर्भिषजां वरः"। फिरङ्गिण्याः प्रसङ्गत इति विशेषार्थम्। रूपमाह "फिरङ्गस्त्रिविधो ज्ञेयो बाह्याभ्यान्तरतस्तथा। वहिरन्तर्भवश्चापि तेषां लिङ्गानि च ध्रुवम्। तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक्। स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि स स्मृतः। सन्धिष्वाभ्यन्तरः स स्यादुभयोर्लक्षणैर्युतः। कष्टदोऽतिचिरस्थायी कष्टसाध्यतमश्च सः"। उपद्रवानाह "कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता। अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी"। साध्यत्वादिकमाह "वहिर्भवो भवेत् साध्यो नूतनो निरुपद्रवः। आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः। बहिरन्तर्भवो जीर्णः क्षीणस्योपद्रवैर्युतः। बोध्यो व्याधिरसाध्योऽयमित्यूचुर्मुनयः पुरा"। ततोऽस्त्यर्थे इनि। फिरङ्गिन् तद्देशस्थजने तद्रोगयुते च त्रि० स्त्रियां ङीप्। [विश्वः।

**फु** पु० फल—डु। मन्त्रोच्चारणपूर्वके १फुत्कारे २तुच्छवाक्ये च

**फुक** पु० खगे शब्दच०। [फणायां पु० हेमच०।

**फुट** त्रि० स्फुट—क पृषो०। १विदीर्णे २प्रस्फुटिते च। ३सर्प-

**फु(फू)त्** अव्य० फल—डुति पृषो० वा दीर्घः। अनुकरणशब्दे।

**फुत्कर** पु० फुदित्यव्यक्तं शब्दं करोति कृ—ट। वह्नौ शब्दच०

**फुत्कार** पु० कृ—भावे घञ् फुदित्यव्यशब्दस्य कारः। फुदित्यव्यक्तशब्दकरणे। फूत्कारयुक्ते वह्नौ आहुतिनिषेधो यथा "अल्पे कृशे सस्फुलिङ्गे वामावर्त्ते भयानके। आर्द्रकाष्ठैः ससुत्पन्ने फुत्कारवति पावके। कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्। आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम्" ति० त०।

**फुप्फुस** पु० सुश्रुतोक्ते हृदयस्य वामपार्श्वस्थिते (फुलका) इति ख्याते कोष्ठभेदे "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" व्याख्या चेदम् "आमस्य स्थानमामाशयः नाभेरूर्द्धम्। अग्नेः स्थानं पच्यमानाशयः नाभिमध्यम्। पक्वस्य स्थानं पक्वाशयः नाभेरधः। मूत्रस्य स्थानं वस्तिः। रुधिरस्य स्थानं यकृत्प्लीहानौ। हृत् हृदयम्। इन्दुरसपाकमलवद् यः

शोणितमलसत्त्वः उण्डुकः स चान्त्रदेशे व्यवस्थितः पुरीषाधानम्। फुप्फुसः हृदयस्य वामपार्श्वे स्थितः। (फक्का) इति ख्यातः" इति विजयरक्षितः।

**फुल्त(ल्ल)** त्रि० फल-आरम्भे भावे क्त वा तयोर्नेट् अत इत्त्वम्। १फलनारम्भयुते २फलने च। पक्षे फलित इति। अन्यत्र फलित इत्येव। भावे क्तिन् फुल्ति फलने स्त्री।

**फुल्ल** विकाशे भ्वा०पर०अक०सेट्। फुल्लति अफुल्लीत् पुफुल्ल।

**फुल्ल** त्रि० फुल्ल—विकाशे अच्। विकशिते पुष्पे अमरः।

**फुल्लफाल** पु० फुल्लं फलति फल-अण्। स्वर्पवाते त्रिका०।

**फुल्लदामन्** न० ६त०। १फुल्लानां दामनि "मोगो नौ तौ गौ शरहयतुरगैः फुल्लदाम प्रसिद्धम्" छं०र० उक्ते जगर्विंशत्यक्षरपादके छन्दोभेदे।

**फुल्ललोचन** त्रि०फुल्लं विकशितं लोचनमस्य। १विकशितनेत्रे स्त्रियां स्वाङ्गत्वेऽपि बह्वच्कत्वात् टाप्। २मृगभेदे पुंस्त्री०शब्दच० स्त्रियां जातित्वात् ङीष्। [संक्षिप्तसा०।

**फुल्लरीक** पु० फल—फर्फरीकादि० नि० १देशभेदे २सर्पे च

**फेण(न)** पु० स्फाय-न पृषो० मतान्तरे णत्वम्। दुग्धजलादेरुपर्य्युपरिस्थे बुद्बुदाकारे पदार्थे (फेना) अस्य णान्तत्वमपि "हंसस्य गयो नदीतीरे निनदैः संप्रतीयिरे। यथा सारस्वता मन्त्रा अन्तरे फेणसङ्कुता" इत्युक्तौ पक्षे अन्तरेफेण अन्तःस्वरकारेण संयुता इत्यर्थः। २हिमे च ३गुडविकारभेदे स्त्री ङीप्। "वटो वेशवारात् लवङ्गेन फेणी शमं पर्पटः शिग्रुवीजेन याति"जीर्णमञ्जरी।"वानीरं गगनं फेनमनच्छ दन्त्यनान्वितम्। चाङ्कः फाल्गुनमिच्छन्ति केचिन्मूर्द्धन्यणान्वितम्" भरतधृतवाक्यम्।

**फेण(न)क** स्वार्थे क संज्ञायां कन् वा। १फेनशब्दार्थे २पिष्टकभेदे त्रिका०।

**फे(ण)नका** स्त्री फे(ण)न इव कायति कै—क। जलपक्वतण्डुलचूर्णे (काइ) शब्दच०।

**फेण(न)दुग्धा** स्त्री फेणः(नः) इव दुग्धं निर्यासोऽस्य। (दुधफेणा) क्षुपभेदे राजनि०।

**फेण(न)वाहिन्** पु० (फेण(न)मिव वहति श्वेततान्। वह—णिनि। वस्त्रे शब्दमाला। [राजनि०।

**फेणा(ना)** स्त्री फेण(न) अस्त्यर्थे अच्। सातलाक्षुपे

**फेणा(ना)ग्र** न० ६त०। बुद्बुदे। हारा०।

**फे(णि)निका** स्त्री (खाजा) इति ख्याते पक्वान्नभेदे प्रताप्यशब्दे २१८३।२४ पृ० दृश्यम्।

**फणि(नि)ल** त्रि० फेन(ण)+अस्त्यर्थे इलच्। फेन(ण)विशिष्टे। २कोलिफले ३मदनवृक्षफले च न०मेदि०। ४वदरवृक्षे राजनि० ५अरिष्टवृक्षे च पु० अमरः।

**फेत्कारिणी** स्त्री तन्त्रभेदे।

**फेत्कारीय** पु० तन्त्रभेदे। [स्त्रियां जातित्वात् ङीष्।

**फेरु** पुंस्त्री० फे इत्यव्यक्तं रौति रु-बा० ड। शृगाले शब्दर०

**फेरण्ड** पुंस्त्री० फे इत्यव्यक्तं रण्डति रण्ड—अच्। शृगाले हेमच० स्त्रियां जातित्वात् ङीष्।

**फेरव** पुंस्त्री फे इत्यव्यक्तो रवोऽस्य। १शृगाले अमरः। २राक्षसे मेदि०। स्त्रियां ङीष् ३धूर्त्ते त्रि० शब्दर०।

**फेरु** पु० फे इत्यव्यक्तं रौति रु—ड्। १शृगाले अमरः।

**फेल** गतौ भ्वा०पर०सक०सेट्। फेलति अफेलीत् पिफेल। ऋदित् चङि न ह्रस्वः। अपिफेलत् त।

**फेल(ला)** न०स्त्री० फेल-अच् वा टाप्। १भुक्तसमुज्झिते उच्छिष्टे शब्दरत्ना० न०। अमरे स्त्री।

**फेलि** स्त्री फेल-इन्। उच्छिष्टे भुक्तावशिष्टे जटाध० स्वार्थे क फेलिका तत्रार्थे

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये फकारादिशब्दसङ्कलनम्।

---

फाण्टशब्दपरिशिष्टम्—"तद्वै नवनीतं भवति घृतं देवानां फाण्टं मनुष्याणाम्" शत०ब्रा० "नवनीतभावात् प्रागवस्थापन्नं द्रव्यं फाण्टमित्युच्यते" भाष्यम्।

## ब

**बकारः** पवर्गस्य तृतीयवर्णः कादिषु त्रयोविंशतितमो व्यञ्जनवर्णः जिह्वाग्रेण ओष्ठयोः स्पर्शेन उच्चार्य्यत्वात् स्पर्शवर्णः। अस्योच्चारणस्य स्थानमोष्ठौ। उच्चारणे ओष्ठजिह्वाग्रेण स्पर्शः आभ्यन्तरप्रयत्नः। बाह्यप्रयत्नाः संवारनादघोषाः अल्पप्राणश्च। अस्य वाचकशब्दाः तन्त्रे वर्णाभिधानोक्ता यथा "बो वनी भूधरो मार्गो घर्घरी लोचनप्रियः। प्रचेताः कलसः पक्षी स्थलगण्डः कपर्दिनी। पृष्ठवंशोऽभया मत्तः शिखिवाहो युगन्धरः। सुखबिन्दुर्बली घण्टा योद्धा त्रिलोचनप्रियः। क्लेदिनी तापिनी भूमिः सुगन्धिर्भ्रिवलिप्रियः। सुरभिर्मुखविष्णुश्च संहारो वसुधाधिपः। षष्ठी पुरं चपेटा च मोदको गगनं पतिः। पूर्वाषाढ़ा मध्यलिङ्गः शनिः क्लृप्तृतीयको"। तस्याधिष्ठातृदेवताध्यानं यथा "नीलवर्णां

त्रिनयनां नीलाम्बरधरां पराम्। नागहारोज्ज्वलां देवीं द्विभुजां पद्मलोचनाम्। एवं ध्यात्वा बकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य ध्येयस्वरूपं यथा "बकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। शरच्चन्द्र प्रतीकाशं पञ्चदेवमयं सदा" कामधेनुत०। मातृन्यासेऽस्य पृष्ठवंशे न्यस्यता। काव्यादौ प्रथमप्रयोगे वकार-शब्दोक्तं फलम्।

**ब** पु० बल—ड। "बः पुमान् १वरुणे २सिन्धौ ३भगे ४तोये ५गते तु वा। ६गन्धने ७तन्तुसन्ताने पुंस्येव ८वपने स्मृतः" मेदि०। ९कुम्भे शब्दर०।

**बंहिष्ठ** त्रि० अतिशयेन बहुः इष्ठन् बंहादेशः। अतिशय-बहुले अमरः। [बहुले स्त्रियां ङीप्।

**बंहीयस्** त्रि० अतिशयेन बहुः ईयसु बंहादेशः। अतिशय-

**बकुर** त्रि० भास्कर+भयङ्कर+वा पृषो०। १भास्करे २भयङ्करे च ऋ० १।११७।२१ भा०।

**बठ** वृद्धौ सामर्थ्ये च भ्वा०पर०सक०सेट्। बठति अबठीत् अबाठीत्। बबाठ बेठतुः। [अमरः।

**बडवा** स्त्री बलं वाति वा—क लस्य डः। १घोटक्याम्, २अश्विनीनक्षत्रे ज्यो०। ३दास्याञ्च। बड़वाकृतशब्दे दृश्य०

**बड़वाकृ(हृ)त** न० बड़वया दास्या कृतः (हृतः) वा। दास-भेदे "भक्तदासश्च विज्ञेयस्तथैव बड़वाकृ(हृ)तः" स्मृतिः।

**बडवाग्नि** पु० बड़वायाः शिवसृष्टाश्वायामुखस्थोऽग्निः। स-मुद्रस्थिते घोटकीमुखस्थे कालानले। कालिकापु०४१अ०। तयोत्पत्तिरुक्ताऽस्य। और्वशब्दे १५८१।८२पृ० अन्य-थोत्पत्तिरुक्ता दृश्या। बड़वानलादयोऽप्यत्र।

**बड़वामुख** पु० बड़वाया मुखं स्थानत्वेनास्त्यस्य अर्श आदि-त्वादच्। समुद्रस्थे कालानले हेमच०।

**बड़वासुत** पु० द्वि०व० ६त०। अश्विनीकुमारयोः। अश्विनी-कुमारशब्दे दृश्यम्। [बेणतुः

**बण** शब्दे भ्वा०पर०सक०सेट्। बणति अबाणीत्-अबणीत्

**बण** पु० बण—अच्। शब्दे भरतः।

**बणिक्पथ** पु० ६त० अच्समा०। हट्टे। [शब्दच०

**बणिग्बन्धु** पु० बणिजां बन्धुरिव पोषकत्वात्। नीलीवृक्षे

**बणिग्भाव** पु० ६त०। बाणिज्ये आजीवनार्थं क्रयविक्रय-करणे अमरः।

**बणिग्वह** पु० बणिजं वहति वह—अच्। उष्ट्रे शब्दच०

**बणिज्(ज)** पु० पणायते व्यवहरति पण—इजि इजो वा पस्य वः। आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि अमरः। २ज्योतिषोक्ते ववादितः षष्ठे करणे च ४बाणिज्ये स्त्री मेदि०। स्वार्थे अण् बाणिज तत्रार्थे अमरः।

**बणिज्य** न० वणिजो भावः कर्म वा य। बाणिज्ये आ-जीवनार्थं क्रयविक्रयादिव्यवहारे भरतः स्त्रीत्वमपि। "चतुरेण चतुर्वर्गचिन्तामणिवणिज्ययेति" मुक्ताफलम्। ष्यञ्। बाणिज्य तत्रार्थे न०।

**बद** स्थैर्ये निश्चलभवने भ्वा०पर०सक०सेट्। बदति अबादीत् अबदीत्। बबाद बेदतुः।

**बद** भाषणे वा चु०उभ०पक्षे भ्वा०पर०सक०सेट्। वादयति ते अबीबदत्-त। पक्षे बदतीत्यादि।

**ब(व)दर** पु० बदति स्थिरीभवति छिन्नस्यापि पुनः प्ररोहेण बद+स्थैर्ये अरच्।१कोलिवृक्षे २देवसर्षपवृक्षे राजनि०। तस्य फलम् अण् तस्य लुक्।३कोलिफले राजनि०। कर्क-न्धूशब्दे दृश्यम्।४कार्पासफले ५कोलिफले न० ६कोलिभेदे (सेओयाकुल) कार्पासास्थि पु० मेदि०। अन्त्यस्यादित्वम-स्यान्ये रुक्तम्।८वराहक्रान्तायां १कार्पासवृक्षे स्त्री अमरः।

**बदर(प)पाचन** न० तीर्थभेदे भा०श०४९अ०। तत्र इन्द्रोप-देशेन कुमार्य्यां पञ्चवदराणां पचनात्तथात्वम्।

**ब(व)दरफली** स्त्री ब(व)दरस्येव फलमस्याः ङीप्। भूमि-ब(व)दर्य्याम् राजनि०।

**ब(व)दरवल्ली** स्त्री ब(व)दरफलप्रधाना वल्ली शा०त०। भूमि-ब(व)दरीतिख्याते लताभेदे राजनि०।

**ब(व)दरामलक** न० ब(व)दरमिवामलकम्।१प्राचीनामलके हारा०। समा०द्व०। २वदरामलकफलयोः समाहारे न०

**ब(व)दरिकाश्रम** पु० न०। वदरी+स्वार्थे क तस्याः स-मीपे तच्चिह्नितोवाश्रमः। तीर्थविशेषे। ब(व)दरीशैलो-ऽप्यत्र। भा० व० ९२ अ० दृश्यम्। बदरिकावनमध्यत्व तच्च हिमालयपर्वतैकदेशे श्रीनगराख्यदेशसमीपे अलक-नन्दानदीपश्चिमभागे स्थितम्।

**ब(व)दरी** स्त्री ब(व)दर+गौरा०ङीष्। १कोलिवृक्षे अमरः २कार्पास्यां शब्दर० कपिकच्छ्वाम् राजनि०। ततः पील्वा० पाके कुणच्। वदरीकुण तत्पाके न०।

**ब(व)दरीच्छदा** स्त्री ब(व)दर्य्या इव छदो यस्याः।१हस्ति-कोलिवृक्षे २शङ्खिनख्याञ्च राजनि०।

**बवदरीपत्र** पु० ब(व)दर्य्या इव पत्रमस्याः। नखीनामगन्ध-द्रव्ये जटा०। स्वार्थे क। तत्रैव। [लिकायाम् शब्दमा०

**बवदरीफला** स्त्री ब(व)दर्य्या इव फलमस्याः। नीलशेफा-

**बद्ध** त्रि० बन्ध—कर्मणि क्त। बन्धनकर्मणि अमरः।

**बद्धगुद** न० बद्धं गुदमत्र । कोष्ठबन्धकारके रोगभेदे "यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वापिहितं यथावत् । सञ्चीयते तस्य मलः सदोषात् शनैः शनैः सङ्करवच्च नाड्याम् । निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति" भावप्र० ।

**बद्धफल** पु० बद्धानि फलान्यस्य । करञ्जवृक्षे राजनि० ।

**बद्धमुष्टि** त्रि० बद्धः दानायाप्रसारितो मुष्टिर्यस्य । कृपणे ।

**बद्धमूल** त्रि० बद्धं मूलमस्य । दृढमूले ।

**बद्धरसाल** पु० नि०क० । राजाम्रभेदे राजनि० ।

**बद्धशिख** त्रि० बद्धा शिखा येन यस्य वा । "सदोपवीतिन भाव्यं सदा बद्धशिखेन च" प्रा०त०उक्ते १शिखाबन्धनयुक्ते २उच्चटायां स्त्री मेदि० ।

**बध** पु० हन–अप् । वधादेशः । हनने प्राणवियोगसाधने व्यापारे अमरः । बधपदार्थविशेषं वधिभेदश्च प्रा० वि० उक्तौ यथा

"अथ बधो निरूप्यते । ननु कोऽयं बधः किं बधित्वं कतिविधं च तत्, ? उच्यते प्राणवियोगफलकव्यापारो बधः तन्निष्पादकत्वञ्च साक्षात्परम्परोदासीनं स्मृतिकारपरिगणितं बधित्वम् अतो नेषुकारादिष्वतिव्याप्तिः तच्च पञ्चविधं स्मृतिस्वरसात् कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहको निमित्ती चेति यथाह आपस्तम्बः "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः" । अनुग्राहकमाह याज्ञवल्क्यः "चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः" । तथा मनुः "बहूनामेककार्य्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः" । भविष्ये "यद्येकं बहवो विप्रा घ्नन्ति विप्रमनागसम् । तदैषां निष्कृतिं वच्मि शृणुष्व कमला गुह ! । तेषां यस्य प्रहारेण स विप्रो निधनं गतः । सरस्वतीं प्रतिस्रोतः सञ्चरेत् पापशुद्धये" । स च द्विविधः । एको बध्यप्रतिरोधकः अन्यः स्वल्पप्रहर्त्ता । निमित्तिनमाह विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः । यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" । अत्र नरान्तरव्यापाराव्यवधानेन बधनिष्पादकः कर्त्ता, यः कर्त्तारं कारयति स प्रयोजकः सोऽपि द्विविधः । एकः स्वतोऽप्रवृत्तमेव पदातिं वेतनादिना बधार्थं प्रवर्त्तयति अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति । अनुमतिदाता अनुमन्ता । अनुमतिश्च द्विविधा । एका यद्विरोधाद्धननं न सम्भवति तस्य विरोधिनो मया निरोधः कर्त्तव्य इति प्रयुक्तिः । अपरा एनं हन्मीति वचने शक्तस्याप्रतिषेध एव" । हिंसायाः पापाद्यनिष्टजनकत्वेऽपि वैधहिंसाया इष्टफलजनकत्वात् नानिष्टजनकता "यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । अतस्त्वां घातयिष्यामि तस्माद्यज्ञे बधोऽबधः" ति० त० उक्तेः मनुनापि "या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्यात् वेदाद्धर्मो हि निर्बभौ" उक्तेश्च । अवैधः अहिंसा च तज्जन्यपापाजनकत्वेन तद्विरोधीत्यर्थः । बहूनां रक्षणार्थमेकस्य वधेऽपि पुण्यजनकत्वमुक्तम् "एकस्य यत्र निधने प्रवृत्ते दुष्टकारिणः । बहूनां भवति क्षेमं तस्य पुण्यप्रदो बधः । कृतघ्नो यो सुरापश्च ब्रह्महा गुरुतल्पगः । आत्मानं घातयेद्यस्तु तस्य पुण्यप्रदो बधः" कालिका०२०अ० । ब्रह्महन्तृबधेऽपि न राज्ञो दोषः प्रा०वि०स्थितः "तथा नाततायिबधे दोषो हन्तुर्भवति कश्चन" स्मृतेः आततायिबधेऽपि नानिष्टफलमिति यथायथं बोध्यम् ।

**बध** संयमने चु०उ०सक०सेट् । बाधयति–ते अबीबधत्–त ।

**बध** निन्दायां बन्धने च भ्वादि०आत्म०सक०सेट् । बीभत्सते अबीभत्सिष्ट । निन्दनेऽर्थे एव स्वार्थे सन् बन्धने तु न तेन तत्र बधते अबधिष्ट इत्येव ।

**बधक** त्रि० बध–क्वुन । १बधकर्त्तरि त्रि० कौ० । २हिंस्रे ३व्याधे ४स्वल्पे च संक्षिप्तसा० ।

**बधत्र** न० बध–करणे कत्रन् । अस्त्रे उणादि० । [हारा० ।

**बधस्थली** स्त्री ६त० । श्मशाने त्रिका० । बधस्थानमप्यत्र न०

**बधाङ्कक** न० बधः अङ्कमत्र कप् । कारागृहे त्रिका० ।

**बधार्ह** त्रि० बधमर्हति अर्ह–अण् उ०स० । बधदण्डार्हे ।

**बधिर** त्रि०बन्ध–किरच् । श्रोत्रेन्द्रियरहिते श्रवणशक्तिशून्ये । तस्यानंशिता मनुनोक्ता यथा "अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा" । ततः अरीहणा० चतुरर्थ्यां वुञ् । बाधिरक तन्निकटदेशादौ त्रि० । ततः दृढा०भावे वा इमनिच् पक्षे ष्यञ् । बधिरिमन् पु० बाधिर्य्य न० तद्भावे तन्निदानादि माधवकरेणोक्तं यथा "यदा शब्दवहं वायुः स्रोतआवृत्य तिष्ठति । शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते" ।

**ब(व)धू** स्त्री बध्नाति ममतया बन्ध–ऊ नलोपः, उह्यते वह–ऊ धश्चान्तादेशो वा । १भार्य्यायाम्, २स्नुषायाञ्च अमरः

## एतानि मुद्रितसंस्कृत पुस्तकानि ।

१ आशुबोध व्याकरणम् २।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः १०
४ सिद्धान्तकौमुदी सरला सहिता ११
५ सिद्धान्तबिन्दुसार (वेदान्त) ॥
६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ।।।
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ।/
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥
१३ रत्नावली नाटिका सटीक ।।।
१४ मालविकाग्निमित्र सटीक १॥
१५ धनञ्जय विजय सटीक ।
१६ महावीरचरितनाटक १॥
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ।।।
१९ लीलावती ।।।
२० बीजगणित १
२१ शिशुपालवध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २
२३ कुमारसम्भव पूर्वखण्ड सटीक ।।।
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ।।।
२६ वाचस्पत्यम् (वृहदभिधान) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति /
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शनसंग्रहः १
३१ भामिनीविलास सटीक १
३२ हितोपदेश सटीक १
३३ भाषापरिच्छेद मुक्तावलीसहित १
३४ बहुविवाहवाद ।०
३५ दशकुमारचरित सटीक १॥
३६ परिभाषेन्दुशेखर ।।।
३७ कविकल्पद्रुम धातुपाठः ॥
३८ चक्रदत्त (वैद्यक) २॥
३९ उणादिसूत्र सटीक २
४० मेदिनीकोष १
४१ पञ्चतन्त्रम् २॥
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥
४३ माधवचम्पू ।/
४४ तर्कसंग्रह ॥
४५ प्रसन्नराघव नाटक १
४६ विवेकचूडामणि ।/
४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।
४९ ऋतुसंहार सटीक ।/
५० विक्रमोर्वशी (सटीक) १॥
५१ वसन्ततिलक भाण ॥
५२ गायत्री व्याख्या ।/
५३ सांख्यदर्शन (भाष्यसहित) २
५४ भोजप्रबन्ध ।।।०
५५ नलोदय सटीक ॥/
५६ ईश केन कठ प्रश्न मुण्डक माण्डूक्य (सटीक सभाष्य) ५
५७ छान्दोग्य सटीक सभाष्य ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक ३
५९ वृहदारण्यक सटीक सभाष्य १००
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ।।।०
६३ पातञ्जलदर्शन (सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् /
६६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् सभाष्य २
६९ चन्द्रशेखरचम्पूकाव्य २
७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्यकृत भाष्यसहिता १
७२ विद्धशालभञ्जिकानाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कार सटीक २
७५ प्रियदर्शिका नाटिका सटीक ॥
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत) पुष्पवाणविलास काव्य सटीक ॥
७९ अष्टिष शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १
८० मनुसंहिता टीका सहित ५
८१ नैषधचरितम् टीका सहित १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक(मुरारिकृत) २
८७ दैवतब्राह्मणसभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसा परिभाषा ॥०
९० अर्थसंग्रह(लौगाक्षीमीमांसा) ॥
९१ रघुवंश सटीक १॥०
९२ मेघदूत सटीक ॥०
९३ कथासरित्सागर ४
९४ ईश्वरानुमानचिन्तामणि
(गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २॥
९६ सटीक वाल्मीकिरामायण
बालकाण्डस्य प्रथमावधि
सप्तदश सर्गपर्य्यन्तम् १
९७ सटीक वाल्मीकिरामायण
बालकाण्डस्य अष्टदश सर्गावधि
सप्तसप्तति सर्ग पर्य्यन्तम् २
९८ मदनपालनिघण्टुः(वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः/
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः।
१०१ साहित्यदर्पणम्(अलङ्कार) १॥०
१०२ श्रीहर्षचरित वाणभट्टकृत २
१०३ अमरकोष ॥०
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत
शारीरकभाष्य तथा गोविन्दानन्द-
कृत टीका सहित १०

१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसार सटीक १
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २
११० अत्रि विष्णु, हारीत, याज्ञ-
वल्क्य उशना अङ्गिरा यम आप-
स्तम्ब संवर्त्त कात्यायन वृहस्पति
पराशर व्यास शङ्ख लिखित दक्ष-
गौतम शातातप वशिष्ठ प्रणीत
संहिता (धर्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता(वैद्यक)सम्पूर्ण १०
११३ रसेन्द्रचिन्तामणि तथा रस-
रत्नाकर (वैद्यक) ६
११४ भगवद्गीता शाङ्करभाष्य आनन्द
गिरिकृतटीकातथानुबोधिनीसमेत ५
११५ शब्दशक्ति प्रकाशिका १
११६ मालतीमाधव सटीक १॥
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सन्मात्रशाब्दिलक्षण ॥
१२० लघुकौमुदीव्याकरणम् ॥०
१२१ महानाटकम्(हनुमन्नाटक) १
१२२ दशरूपकम् (अलङ्कार) १॥०
१२३ भोजचम्पू (भोजदेव कृत
चम्पूरामायणम्) १
१२४ भारत चम्पू सटीक ४

१२५ मार्कण्डेयपुराणम् ६
१२६ गोलाध्यायः १
१२७ गणिताध्यायः १
१२८ पञ्चदशी (सटीक) १
१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १
१३० शकुन्तलानाटक टीकासहित १
१३१ शब्दरूपदर्श ॥०
१३२ वृहत्संहिता
वा वाराहीसंहिता ४
१३३ तर्कामृत (जगदीशकृत) ।०
१३४ द्वात्रिंशत्पुत्तलिका १
१३५ उत्तररामचरित सटीक १।
१३६ शङ्करविजय १॥०
१३७ मृच्छकटिकप्रकरण सटीक २
१३८ काव्यादर्शसटीक(अलङ्कार) २
१३९ अष्टाङ्गहृदय संहिता(वाग-
भटकृत वैद्यक) ६
१४० शुक्रनीति सटीक २
१४१ गीतगोविन्द सटीक ॥०
१४२ अग्निपुराणम् ७
१४३ विष्णुपुराणम् ५
१४४ मीमांसादर्शन सभाष्य १२
१४५ अध्यात्मरामायण सटीक ४
१४६ महानिर्वाणतन्त्रम् सटीक ४
१४७ मीमांसादर्शनस्य
अधिकरणमाला १०

कलिकाता संस्कृत विद्यामन्दिरे–बि, ए, उपाधिधारिणः
श्रीजीवानन्द विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि।